
Khao Parrys Jeeto Prizes!
Send 20 wrappers, win a Parrys Stuntman!
Send in a total of 20 wrappers of Madras Café, Coconut Punch, Coffy Bite and Lacto King, along with your name, date of birth and address, and a cool name for your Parrys Stuntman, to:
Khao Parrys Jeeto Prizes,
P.O. Box No.: 7002, Chennai - 92.
And await your Parrys Stuntman by mail! The best names for the Parrys Stuntman get to win Apple iMac's!
MEGA-PRIZE
12 Apple iMac's to be won!
COFFY BITE
COCONUT PUNCH
MADRAS CAFE
Last date for entries: 25th June 2000.
Winners of the computer will be intimated by mail.

# चन्दमामा

सम्पुटः - १७ जुलै - २००० सञ्चिका - ४



## अन्तरङ्गम्

**कथाः**



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai–600 026. Editor: Viswam

## एतस्य अङ्कस्य विशेषाः



अपूर्वं पेयम्
(वेतालकथा)



मन्दमतिः



सुवर्णसिंहासनम्

स्वपरम्परा अभिज्ञायताम् !





Editor
VISWAM

Editorial Advisors
RUSKIN BOND
MANOJ DAS

Consultant Editor
K. RAMAKRISHNAN

ALL CORRESPONDENCE TO
Chandamama Magazine Division
Chandamama Buildings
Vadapalani, Chennai–600026
Tel/Fax : 4841778/4842087
e-mail : chandamama@vsnl.com

MUMBAI OFFICE
2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 022-388 7480
Fax: 022-3889670

**For USA**
**Single copy $2**
**Annual subscription $20**

*Mail remittances to*
**INDIA ABROAD**
**43 West 24th Street**
**New York, NY 10010**
**Tel: (212) 929-1727**
**Fax (212) 627-9503**

*संस्थापकौ* – **चक्रपाणिः नागिरेड्डी च**

# भारतीयानां भारतीयता

एषा कथा शैशवं पाश्चात्यदेशे यापितवतः कस्यचित् भारतीयस्य । तदीयौ मातापितरौ विदेशे निवसतः इत्यतः तदीयं बाल्यं तत्रैव यापितम् । अनन्तरकाले सः द्विवारं भारतम् आगत्य गतः । भारतीयताविषये तस्य आसक्तिः प्रवृद्धा । भारतस्य भव्येतिहासविषये परम्पराविषये च तेन बहु पठितम् । सः भारतस्य आराधकः जातः । भारतम् आगत्य भारतमातुः सेवा करणीया इति तेन सङ्कल्पितम् । तेन प्रभूता सम्पत्तिः सम्पादिता आसीत् । तदीयौ मातापितरौ अपि मरणकाले तस्मै प्रभूतां सम्पत्तिं दत्तवन्तौ । सेवाकार्यं किमपि आरम्भणीयम् इति सङ्कल्प्य सः भारतम् आगतः ।

'यत् राज्यं भवत्सम्बद्धं तत् न विस्मरणीयं भवता । भवतः कार्यक्षेत्रं भवतु तदेव राज्यम्' इति भारतस्य राजधान्यां हितैषिणः तम् उक्तवन्तः । सः स्वसम्बद्धं राज्यं गतवान् । तत्र उक्तं – 'या जातिः भवतः, तस्याः उद्धारार्थं कार्यं करणीयम्' इति ! ततः – 'उपजातिसेवा एव श्रेयसे' इत्यपि उक्तम् ! 'यत्सम्प्रदायसम्बद्धः भवान्, तस्य निमित्तम् एव धनव्ययः करणीयः' इति सानुरोधम् आदिष्टः सः ।

भारते भारतीयम् आत्मतत्त्वं द्रष्टुम् अशक्नुवन् भारभूतमनस्कः सः विदेशं प्रतिगतवान् । समग्रां सम्पत्तिं 'युनेस्को'संस्थायै समर्पितवान् च !!

वयं शतकोटिजनाः भारतीयाः एकात्मभावनया जीवन्तः न स्मः । एतस्य पर्यायः कः ? वयं जाति-मत-सम्प्रदाय-राज्यादिभेदान् विस्मृत्य भारतीयत्वम् आत्मनि आश्रयेम । अस्माकं विकासः अस्माभिः एव साधनीयः ।

एषु दिनेषु नूतनानि राज्यानि कानिचन आरचितानि । नूतने राज्ये केषाञ्चित् नगराणाम् अन्तर्भावं न असहन्त केचन पूर्वराज्यीयाः । महान् विरोधः अनुष्ठितः तैः । भूयान् च कोलाहलः कृतः । किं किमपि नगरं देशात् अन्यत्र नीयते ? अन्यराज्ये प्रविष्टम् अपि तत् नगरं भारते एव खलु स्थास्यति ? नूतनराज्यस्य आरचनं शासनव्यवहारसम्बन्धि । यावत् ते भागाः भारतस्य अङ्गानि भवन्ति तावत् न काऽपि क्षतिः । अतः भारतीयाः वयं भारतीयत्वेन व्यवहरणम् आदौ जानीयाम ।

# वार्ताविशेषः

## नूतनः मोहकः शत्रुः

सद्यःकाले किं भवन्तः पितरं सूचितवन्तः यत् यादृशी मम मित्रस्य समीपे अस्ति तादृशी सेल्दूरवाणी, सञ्चारिणी दूरवाणी वा दापनीया इति ? यदि सूचितं स्यात् तर्हि तस्याः अभ्यर्थनायाः पूर्त्यै अधिकम् अनुरोधं मा कुर्वन्तु कृपया । भवत्सकाशे तादृशी दूरवाणी नास्ति इति उपहसेत् सः । उपहसतु नाम सः । विज्ञानिनः वदन्ति यत् तादृशदूरवाण्याः उपयोगं ये बालाः कुर्वन्ति ते मस्तिष्कश्वयथुप्रभृतिभिः घोरव्याधिभिः पीडिताः भवितुम् अर्हन्ति इति । यद्यपि एषः तेषाम् अन्तिमनिर्णयः न, तथापि घोरव्याधिसम्भावना उपेक्षार्हा न खलु ? यतः सकृत् अभ्यस्ता प्रवृत्तिः असाध्या खलु भवति त्यक्तुम् ?



## लियोनार्डस्य जीवकणसन्ततिः

मोनालिसाचित्रं १५ शतके इटलीदेशीयेन लियोनार्डो डाविञ्चिवर्येण निर्मितम् । तच्च अपूर्वकलाकृतित्वेन परिगण्यते । मानवः आकाशे उड्डयनं कर्तुं यादृशं तन्त्रज्ञानम् इच्छेत् तादृशम् अपि ऊहितम् आसीत् तेन । अतः सः विमानस्य रेखाचित्रं रचितवान् ।

तदीये काले कलाकाराः वर्णचित्रनिर्माणावसरे वर्णैः सह स्वरक्तं लालां च मिश्रीकुर्वन्ति स्म । इदानीं लियोनार्डोवर्येण रचितं चित्रं परीक्ष्य तदीयां जीवकणसन्ततिम् (DNA) ज्ञातुम् उद्युक्ताः सन्ति वैज्ञानिकसंशोधकाः । टास्कानीयः लियोनार्डोसङ्ग्रहालयस्य निर्देशकः वदति - 'आरक्षकाः अपराधपरिशोधनार्थं यादृशान् क्रमान् आश्रयन्ति तादृशान् एव क्रमान् आश्रयामः वयम् । एतदर्थम् आरक्षकविभागीयानां शोधकानां साहाय्यम् अपि प्राप्स्यामः' इति ।



## मङ्गलगामिनः स्युः शाकाहारिणः

मङ्गलाङ्गणे पादार्पणं कर्तुं प्रयत्नः प्रचलति एषु दिनेषु । मङ्गलग्रहं गत्वा प्रत्यागन्तुं सहस्रं दिनानि आवश्यकानि इति ऊह्यते । तथा ये प्रयाणं कर्तुम् इच्छन्ति तैः शाकाहारिभिः एव भवितव्यं भवति इति संशोधकाः अभिप्रयन्ति । गृञ्जनकं, गोधूमः, सोयाधान्यं, टोमेटोशाकः, मरीचः इत्यादयः, ये मङ्गलग्रहे वर्धनम् अर्हेयुः, ते एव पञ्चदशविधशाकेषु अन्यतमाः तैः सेवनीयाः भवन्ति ।



# एतन्मासे जातः महापुरुषः

बालगङ्गाधरतिलकः १८५६ तमे वर्षे जुलैमासस्य २३ तमे दिनाङ्के जातः । तिलकमहाराजः इत्यपि जनाः तं निर्दिशन्ति स्म । 'भारतीयपरिवर्तनस्य पितामहः' इति ख्यातः अस्ति सः । राष्ट्रकार्ये तस्य सहचरः आसीत् श्री अरविन्दघोषः, यश्च 'भारतीय-राष्ट्रियतासंन्यासी' इति ख्यातः आसीत् लोके । भारतीयराष्ट्रियकाङ्ग्रेस्संस्थायाः कार्यं कुर्वन्तौ तौ देशे मौलिकंपरिवर्तनम् आनीतवन्तौ ।

बालगङ्गाधरतिलकः



तिलकवर्यस्य जन्म महाराष्ट्रे रत्नागिरिप्रदेशे जातम् । सः विधिशास्त्रं (Law) यद्यपि अधीतवान् तथापि न्यायवादी तु न जातः । प्रत्युतः समाजसेवकः पत्रिका-सम्पादकश्च जातः । 'मराठा'-नामिकायाः आङ्ग्ल-पत्रिकायाः, 'केसरी'-नामिकायाः मराठीपत्रिकायाश्च सम्पादकः आसीत् सः । १८९७ तमे वर्षे तेन शिवाजीजयन्तीं निमित्तीकृत्य महान् उत्सवः व्यवस्थापितः । स च जनेषु राष्ट्रभक्तिज्वरम् उदपादयत् । प्लेग्रोगप्रसारस्य सम्भावना अस्ति इति व्याजं वदन्तः आङ्ग्लेयाः अधिकारिणः सामान्यान् जनान् भृशम् अपीडयन्, तेषाम् उत्साहं निरोद्धं च प्रयत्नम् अकुर्वन् । एतत् असहमानः तिलकः आङ्ग्लसर्वकारस्य नीतिं भृशम् अखण्डयत् । तदा आङ्ग्लेयाः राजद्रोहम् आपाद्य तं कारागारे अस्थापयन् ।

१९०७ तमे वर्षे भायतीयराष्ट्रिय-काङ्ग्रेस्संस्थायाः ऐतिहासिकम् अधिवेशनं सूरत्नगरे प्रवृत्तम् । अरविन्दवर्यस्य तिलकस्य च नेतृत्वे असङ्ख्याः प्रतिनिधयः अभ्यर्थितवन्तः यत् आङ्ग्लशासनात् पूर्णस्वातन्त्रम् एव अभियाचनीयम् इति । किन्तु मन्दगामिगणः एतादृशस्य पदस्य स्थापने असम्मतिम् अदर्शयत् । एतस्य परिणामतः काङ्ग्रेस् द्विधा विभक्तम् । तीव्रवादिनां समावेशः अन्यस्थले प्रवृत्तः, यस्य च अध्यक्षः अरविन्दघोषः, मुख्यवक्ता च तिलकः आसीत् ।

१९१० तमे वर्षे अरविन्दवर्यः पाण्डिचेरीं गतवान् । १९२० तमे वर्षे अगस्ट्मासे तिलकः पञ्चत्वम् अगात् । तस्मिन् एव वर्षे डिसेम्बर्मासे नागपुरे प्रवत्ते समावेशे सम्पूर्णस्वातन्त्र्यम् अभ्यर्थ्य काङ्ग्रेस्संस्थया प्रस्तावः पारितः ।

तिलकवर्यः न केवलं राजकीयनेता, अपि तु महाविद्वान् अपि आसीत् । तस्य 'गीतरहस्यम्' 'ओरियन्' इत्येतौ ग्रन्थौ चिरस्थायिनौ स्तः ।

तिलकः वदति – *'भविष्यनिर्णेत्री काचित् दैवी शक्तिः भवति लोके । यदर्थम् अहं कार्यं कुर्वन् अस्मि तस्य हितं मम कष्टानुभवात् एव भवति, न तु स्वातन्त्र्यात् इति तस्याः निर्णयः स्यात् ।'*

# चन्दमामा

जून् - २०००



## उत्तराणि

१. श्मशानरक्षकः हरिश्चन्द्रः । पत्नी शैब्या । श्मशानं वाराणस्याम् आसीत् ।

२. अ. श्रीकृष्णः विदर्भराजकुमारीं रुक्मिणीं परिणीतवन् ।

आ. बलभद्रः कुशस्थलीराजकुमारीं रेवतीं परिणीतवान् ।

इ. नलः निषधराजः आसीत् ।

ई. मार्कण्डेयः पुण्यभद्रतीर्थे तपः कृतवान् ।

उ. गुहः शृङ्गवेरपुरस्य राजा आसीत् ।

३. १. शिलप्पधिकारम् । (इलाङ्गोअडिगळ्विरचितम्)

२. गुणाढ्यः । तस्य कृतिः बृहत्कथा ।

३. महाभारते वनपर्वणि ।

४. कम्बः तुलसीदासश्च ।

५. चार्वाकः ।

---

**अवधीयताम् -**

१. एप्रिल्-प्रश्नावलीनिमित्तं प्रेषितानि उत्तराणि पूर्णतः कस्यापि शुद्धानि न आसन् ।

२. केचन कथाविषये स्वाभिप्रायं न लिखितवन्तः ।

३. प्रश्नावलीस्पर्धायां भागं ग्रहीतुं ये इच्छन्ति ते निवेद्यन्ते यत् प्रश्नावलीनियमाः सम्यक् परिशील-नीयाः पालनीयाः च इति । नियमपालनम् अकृतवताम् उत्तराणि स्पर्धार्थम् अनर्हत्वेन परि-गण्यन्ते ।

# सर्जनात्मिकाः स्पर्द्धाः

**चन्दमामा**

**वाचकान् निमन्त्रयति**

अधोनिर्दिष्टेषु क्षेत्रेषु कल्पनां विस्तारयितुं सर्जनात्मकसाहित्यं स्रष्टुं च....





## छायाचित्रस्य

अनुशीर्षिकास्पर्धा

**१. चित्रशीर्षिकास्पर्धायाः पृष्ठार्थम् -**

केनचित् क्रमेण परस्परं सम्बद्धं चित्रयुगलम् प्रेषयितुम् अर्हन्ति उदीयमानाः चित्रग्राहकाः । चित्रप्रेषणसमये चित्रकारः परस्परसम्बन्धस्पष्टतार्थं स्वस्य आशयम् अवश्यं लिखित्वा प्रेषयेत् ।

**चिताय चित्रयुगलाय**

**रू. ५००/- दीयन्ते पारितोषिकरूपेण**

स्पर्धार्थं चित्रयुगलं यदाकदाचिदपि प्रेषयितुं शक्यम् ।



२. अधोलिखितां लोकोक्तिं सूक्तिं वा अधिकृत्य स्वकीयम् अनुभवं, लघुकथां (नूतनां प्राचीनां वा) प्रेषयितुम् अर्हन्ति भवन्तः । एतदत्र स्मर्तव्यं यत् लोकोक्तिः सूक्तिः वा यां मूलकल्पनाम् आधारीकृत्य प्रवृत्ता, सा न अङ्गीक्रियते । अतः भवदीया कथा ततः अन्या स्यात् ।

एतन्मासीयस्पर्धार्थं लोकोक्तिः -

**"ऋणं हि प्राणहारकम्"**

**चितायै रचनायै रू. ५००/- दीयन्ते पारितोषिकत्वेन**

*रचनां प्रेषयितुम् अन्तिमदिनाङ्कः -*

३०, जुलै - २०००

पुरस्कृता रचना सप्टम्बर् - २००० सञ्चिकायां प्रकाशयिष्यते ।



# वेताल-कथा

## अपूर्वं पेयम्

यदि प्रयत्नः परित्यज्येत तर्हि मम पौरुषस्य एव अवमाननम् इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं श्मशानाभिमुखं प्रस्थितवान् मौनेन । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! अन्धकारमये अपि काले, विपरीतस्थितौ, श्मशानमार्गे अपि भवतः गतिः तु अकुण्ठिता, यतः भवतः लक्ष्यं स्फुटम् अस्ति । तदर्थं निश्चयेन अभिनन्दनीयः भवान् । किन्तु मम विप्रतिपत्तिः भवता आश्रितस्य मार्गस्य विषये । राज्ञः आद्यं कर्तव्यं भवति - बाह्यस्य आन्तरस्य वा शत्रोः अभिज्ञानम् । पूर्वं राजा मयूराक्षः एतादृशम् एकम् अवकाशं प्राप्तवान्



आसीत् । किन्तु सः स्वमूर्खताकारणतः तस्य उपयोगं स्वीकर्तुं न शक्तवान् । भवान् अपि तादृशः इत्येव भाति मम । यावत् अहं मम कथनं न विशदीकरोमि तावत् भवान् प्रायः मम आशयम् अवगन्तुं न शक्नुयात् । अतः मयूराक्षराजस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं काम्भोजराज्यं मयूराक्षः नाम राजा पालयति स्म । अपूर्ववस्तुसङ्गृहे तस्य विषेशासक्तिः आसीत् । ये अपूर्वं वस्तु आनीय यच्छन्ति तेभ्यः प्रभूतं धनं दत्त्वा तान् पुरस्कारोति स्म सः । अतः देशस्य नानाकोणेभ्यः जनाः अपूर्वं वस्तु दातुं राज्ञः समीपम् आगच्छति स्म ।

एकदा कश्चन विलक्षणः पुरुषः राज्ञः आस्थानम् आगतवान् । सः आप्रपदीनं युतकं धृतवान् आसीत् । तदीये नेत्रे भावशून्ये इव दृश्येते स्म । सः खल्वाटः आसीत् । मुखे अल्पं श्मश्रु विराजते स्म । तस्य हस्ते एकं पात्रम् आसीत् ।

सः महाराजं प्रणम्य स्वपरिचयं वदन् अकथयत् - ''महाराज ! अहं भूतनाथस्य कलहकेतुनामकस्य शिष्यः गरलभोगि-नामकः । अहं दीर्घकालं यावत् गुरोः सेवां कृत्वा एकस्य अपूर्वस्य पेयस्य सज्जीकरण-विधिं ज्ञातवान् अस्मि । तत् पेयं पीतं चेत् मनुष्यस्य वास्तविकं व्यक्तित्वं ज्ञायते'' इति ।

तदा महाराजः अवदत् - ''मनुष्यस्य वास्तविकं व्यक्तित्वं द्रष्टव्यं चेत् भवतः पेयस्य का आवश्यकता ? तदीयाः व्यवहाराः सूक्ष्मतया परिशीलिताः चेत् व्यक्तित्वम् अवगम्यते एव'' इति ।

''भवतः कथनम् अवास्तविकम् इति अहं न वदामि । किन्तु तत् असम्पूर्णम् इति तु सुस्पष्टम् । व्यवहाराः बाह्यव्यक्तित्वं निरूपयेयुः, न तु आन्तरिकम् । आन्तरिकं व्यक्तित्वम् एव वास्तविकं स्वरूपं मनुष्यस्य । केषुचित् आन्तरिकं बाह्यं च परस्परविरुद्धम् अपि भवितुम् अर्हति । उदाहरणार्थं भवतः आस्थानम् एव परिशीलयाम । अत्र स्थिताः सर्वे राजभक्तिमन्तः इति तु बाह्यदर्शनात् स्पष्टम् । किन्तु आन्तरिकतया अत्रैव केचन शत्रवः अपि स्युः । तादृशं रूपं प्रदर्शयति मया सज्जीकृतं तत् पेयम् ।''

''आश्चर्यकरम् एतत् सर्वम्'' इति

आश्चर्ययुक्तस्वरेण उक्त्वा राजा आगन्तुकम् अपृच्छत् - ''किं भवान् स्वकथनम् इदानीम् एव प्रमाणीकर्तुं शक्नुयात् ?'' इति ।

''कुतो न ? भवत्पुरतः द्वारपालकः कश्चित् अस्ति खलु ? तम् एव एतत् पाययित्वा परीक्षितुम् अर्हति भवान् । हस्तस्य मणिं द्रष्टुं दर्पणः न आवश्यकः खलु ?'' इति साभिमानम् अवदत् गरलभोगी ।

राजा झटिति रक्षकभटम् आनायितवान् । 'एतत् पीयताम्' इति आदिश्य तस्मै तत् पेयं दत्तवान् च । सः रक्षकभटः राजाज्ञां शिरसा वहन् पेयं पीतवान् ।

अनन्तरक्षणे एव तस्य व्यवहारे परिवर्तनं जातम् । सः राज्ञः पुरतः एव अशिष्टव्यवहारम् आरब्धवान् । राज्ञः पार्श्वे उपविष्टे मुख्यरक्षापाले क्रोधं प्रदर्शयन् उच्चस्वरेण - ''अये रक्षपालाधम ! आसनात् अवतर रे ! मां सर्वेषां पुरतः भर्त्सितवान् खलु भवान् ! धिक् भवन्तम्'' इति उक्त्वा स्वस्य शूलं तम् उद्दिश्य वेगेन क्षिप्तवान् ।

मुख्यरक्षापालः किञ्चित् अपसृत्य शूलप्रहारात् आत्मानं रक्षितवान् । शूलं स्तम्भे लग्नं सत् भूमौ अपतत् । एतत्सर्वं दृष्ट्वा सभास्थाः सर्वे आश्चर्यचकिताः ।

''एषः भवता भर्त्सितः इत्येतत् किं सत्यम् ?'' इति राजा मुख्यरक्षापालम् अपृच्छत् ।

''आम् । एषः परह्यः कर्तव्यपालने प्रमादं कृतवान् आसीत् । अतः मया दण्डसंहितायाः अनुगुणं दण्डः विहितः, प्रमादार्थं भर्त्सितः च'' इति अवदत् मुख्यरक्षापालः ।



''एतस्मात् स्पष्टं यत् मुख्यरक्षापालविषये रक्षकभटस्य यः क्रोधः अन्तः तपन् अपि सुप्तः आसीत् सः इदानीं पेयस्य प्रभावतः प्रकटितः इति'' इति राजा वस्तुस्थितेः विश्लेषणं कृतवान् ।

''आं महाराज ! पेयस्य वैशिष्ट्यम् एव एतत् । अन्तर्निहितं भावं बहिः आनयति एतत् । तस्मात् मनुष्यस्य वास्तविकं स्वरूपं प्रकटितं भवति'' इति उक्तवान् गरलभोगी ।

'एतत् पेयम् अपूर्वं विचित्रं च अस्ति । एतादृशं मया इतःपूर्वं न दृष्टम् एव । एतत् अग्रे कदाचित् महते उपयोगाय कल्पेत अपि' इति चिन्तितवान् राजा ।

ततः सः आदिष्टवान् यत् सः द्वारपालकः कारागारे स्थापनीयः इति । 'गरलभोगिनः



वासव्यवस्था अतिथिगृहे सम्मानपूर्वकं कल्पनीया' इत्यपि आज्ञापितवान् सः ।

तस्मिन् एव दिने मुख्यरक्षापालः महाराजम् एकान्ते दृष्ट्वा निवेदितवान् - ''प्रभो, द्वाररक्षकः गरलभोगी च सम्भूय एतत्सर्वं दर्शितवन्तौ स्यातां कदाचित् । अतः तस्य पेयस्य योग्या परीक्षा करणीया । मह्यं तत् किञ्चित् दत्तं चेत् अहं योग्यपरीक्षां कृत्वा परिणामं निवेदयेयम्'' इति ।

''युक्तम् उक्तं भवता । अद्य दृष्टं वास्तविकम्, आकस्मिकम् उत वञ्चनापूर्णम् इति निर्णेतुं नास्ति प्रमाणम् । अतः पुनः एकवारं तत् परीक्षणीयम्'' इति उक्त्वा राजा पेयस्य कञ्चन भागं मुख्यरक्षापालाय दत्तवान् ।

मुख्यरक्षापालः पेयं स्वीकृत्य शिवमन्दिरं गतवान् । तत्र जटाधारी कश्चन संन्यासी ध्यानमग्नः आसीत् । रक्षापालः तं साष्टाङ्गं प्रणम्य प्रार्थितवान् - ''मान्यवर ! काशीयात्रां समाप्य अहम् अद्यैव प्रत्यागतः । एतस्मिन् पात्रे गङ्गाजलम् अस्ति । यदि भवान् तत् सेवेत तर्हि अहं पुण्यभाक् भवेयम्'' इति ।

संन्यासी आशीर्वादं कृत्वा तत् पेयं पीतवान् । संन्यासिनि कीदृशं परिवर्तनं भवेत् इति प्रतीक्षमाणः आसीत् रक्षापालः । अत्रान्तरे झटिति उत्थितः संन्यासी पार्श्वस्थेन दण्डेन मुख्यरक्षापालं सम्यक् ताडितवान् । तावदेव न, संन्यासिनः सुवर्णाङ्गुलीयकं कण्ठहारं चापि बलात् वशीकृतवान् सः । तदा तत्र उपस्थिताः यामिकाः रक्षापालं रक्षन्तः संन्यासिनं निगृह्य कारागारे स्थापितवन्तः ।

राजा एतां वार्तां श्रुतवान् । मुख्यरक्षापालस्य कुचेष्टां दुर्गतिप्राप्तिं च श्रुत्वा सः सकृत् हसितवान् । अनन्तरकाले सः गाम्भीर्येण अचिन्तयत् - 'न जाने, मम देशे कियन्तः दुष्टाः संन्यासिवेषेण जीवन्ति इति । एतस्य पेयस्य प्रभावात् तु सर्वेषाम् अन्तरङ्गम् आविष्कृतं भवति । अतः महाप्रमाणेन एतस्य पेयस्य सज्जीकरणार्थं लक्षशः सुवर्णनाणकानां व्ययः अपि युक्तः एव' इति ।

तदवसरे राज्ञी तत्र आगतवती । राजा तां पेयस्य वार्तां निवेद्य - ''एतस्य प्रयोगतः स्थलद्वये गुप्तापराधिनौ गृहीतौ । अतः राज्ये सर्वत्र विकीर्णानाम् अपराधिनां ग्रहणार्थम् एतत् नितराम् उपकारकं स्यात्'' इति अवदत् ।

राज्ञी अपि पेयस्य प्रभावं श्रुत्वा आश्चर्यं

प्राप्तवती । किन्तु पेयस्य सामर्थ्यस्य विषये तस्याः पूर्णः विश्वासः न जातः । अतः सा महाराजम् उक्तवती - ''अहम् एतस्य पेयस्य प्रभावं प्रत्यक्षं परीक्ष्य अपराधिग्रहणविषये उपकारत्वम् अस्ति वा न वा इति ज्ञातुम् इच्छामि । यावत् अहम् एतत् परीक्ष्य मदीयम् आशयं न वदामि तावत् एतद्विषये कोऽपि निर्णयः न करणीयः'' इति ।

''तथैव भवतु'' इति उक्त्वा राजा राज्ञ्यै अपि कञ्चन भागं दत्तवान् ।

राज्ञी तत् नीत्वा परिचारिकां सुभाषिणीं पायितवती । पेयं पीतवती सुभाषिणी पाकशालां गत्वा पाचकम् उद्दिश्य अवदत् - ''ह्यः वराकी एषा महाराज्ञी मां विनाकारणं तर्जितवती । स्नानसमये मया पारिजाततैलं न उपयुक्तं, प्रत्युत चम्पकतैलम् उपयुक्तम् इत्येतत् तस्याः कोपस्य कारणम् । एतस्मिन् काले पारिजातपुष्पाणि न लभ्यन्ते इति किं सा न जानाति ? यत् अलभ्यं तत् मया कथं वा उपयोक्तुं शक्येत ? वस्तुतः अपमानोद्देशेन एव तया तथा कृतम् । अधिकारदर्पः तथा कारयति । एतस्य अपमाननस्य प्रतीकारः मया करणीयः एव । भवता अद्य विष-मिश्रितम् अन्नं सज्जीक्रियताम् । अहम् एव तत् राज्ञ्यै दत्त्वा खादयिष्यामि'' इति ।

पाचकद्वारा प्रवृत्तं श्रुत्वा राज्ञी दिग्भ्रान्ता । राज्ञीतः वार्तां श्रुत्वा राजा अवदत् - ''दुष्टानां ग्रहणार्थम् एतत् नितराम् उपकरोति इति तृतीयप्रयोगात् अपि ज्ञातम् अस्ति । अतः लक्षशः सुवर्णनाणकानि व्ययीकृत्य महता प्रमाणेन एतत् पेयं सज्जीकारयिष्यामि । ततः




अधिकारिणः, अन्यराजोद्योगिनः, प्रजाः च तत् पाययित्वा के सज्जनाः, के च दुष्टाः इति परिशीलयिष्यामि । दुष्टान् यथायोग्यं दण्डयिष्यामि । काम्भोजराज्ये केवलसज्जनाः एव सन्ति इति कीर्तिः सर्वत्र यथा प्रसरेत् तथा करिष्यामि'' इति ।

तदा राज्ञी अवदत् - ''पेयस्य सामर्थ्यस्य विषये मम इतोऽपि सन्देहः । सुभाषिणी मां प्राणप्रियां भावयति इत्यत्र नास्ति एव सन्देहः । मद्विषये तस्याः रोषः कोपः वा सर्वथा नास्ति । न भविष्यति अपि । भवान् स्मरत्येव खलु - उद्याने विहारसमये वृक्षशाखायां लम्बमानं, मां दंष्टुम् उद्युक्तं सर्पं सा प्राणापायम् अपि अविगणय्य हस्तेन गृहीत्वा दूरे क्षिप्तवती इति ? अतः पेयस्य



*मनुष्याः भवितुम् इच्छतां जीवने अनुशासनम् अपरिहार्यम् । तत् विना कोऽपि मनुष्यः न भवेत्, प्रत्युत पशुः स्यात् ।*

***– श्रीमाता***

प्रभावः सत् उत असत् इति चिन्तनीयम्'' इति ।

एतत् श्रुत्वा राजा झटिति आसनात् उत्थाय मुख्यद्वारस्थां घण्टां वेगेन वादितवान् । तदा झटिति बहवः सैनिकाः तत्र उपस्थिताः । राजा तान् आज्ञापितवान् यत् सः अतिथि-भवनस्थः दुष्टः गरलभोगी मान्त्रिकः शूलमये कूपे निर्दयं क्षेपणीयः इति ।

वेतालः एवं कथां समाप्य अवदत् – ''अये राजन् ! गरलभोगी शूलमये कूपे क्षेपणीयः इत्येषा राजाज्ञा किं विवेकपूर्णा ? पेयस्य प्रभावात् तेन ज्ञातुं शक्यम् आसीत् यत् कः सुहृत्, कः शत्रुः, कः हितैषी, कश्च दुष्टः इति । चोर-द्रोहि-वञ्चकादीनाम् अभिज्ञानार्थं स्थितं सुलभमार्गं किमर्थं तिरस्कृतवान् सः ? राज्यम् अपराधरहितं कर्तुं स्थितः अवकाशः किमर्थं वा तेन उपेक्षितः? त्रिवारम् अपि पेयस्य सामर्थ्यं प्रमाणसिद्धं जातम् । तथापि राज्ञीवचनं श्रुत्वा क्षणिकावेशेन व्यवहृतवान् राजा । किं सः न अविवेकी ? मम एतेषां प्रश्नानाम् उत्तरं ज्ञात्वा अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्त्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः राजा त्रिविक्रमः अवदत् – ''राजा अपूर्ववस्तूनां सङ्ग्रहे तावत् आसक्तः आसीत् यत् प्राप्तस्य वस्तुनः अप्रत्यक्षसूक्ष्मदुष्प्रभावम् अवगन्तुं सः असमर्थः जातः आसीत् । अतः एव पेयस्य बाह्यप्रभावं दृष्ट्वा सः तथा प्रभावितः अभवत् यत् समग्रे देशे स्थितान् दुष्टान् अपराधिनः च कर्तुम् उद्युक्तस्य गरलभोगिनः दुरुद्देशं ज्ञातुं सः असमर्थः जातः । राज्ञी यदा पानीयस्य सत्प्रभावविषये सन्देहं प्रकटितवती तदा सः अवगतवान् – पेयं जनान् पिशाचाविष्टान् करोति इति । जनान् पिशाचग्रस्तान् कर्तुम् उद्युक्तस्य पिशाचाराधकस्य गरलभोगिनः शूलमये कूपे पातनं युक्तमेव खलु ?'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# लाभः एव महान्

बालकृष्णः कश्चन ग्रामीणः वणिक् । सः कदाचित् वाणिज्यनिमित्तं नगरं गतवान् । कार्यं समाप्य सः भोजनार्थं भोजनालयं प्रति गतवान् । तत्र तद्ग्रामीणः शङ्करः मिलितवान् ।

बालकृष्णस्य मेलनात् सन्तुष्टः शङ्करः अवदत् - ''मित्र ! भवतः मेलनं सन्तोषाय । प्रतिगमनसमये अहम् अपि भवता सह आगमिष्यामि । सहैव गच्छाव तावत्'' इति ।

बालकृष्णः सहमतिं सूचितवान् । ततः तौ भोजनं समाप्य बहिः आगतवन्तौ ।

अत्रान्तरे भोजनालयस्य सेवकः धावन् आगत्य - ''श्रीमन् ! उत्तरीयम् अन्तः एव विस्मृत्य आगतं भवता । स्वीकरोतु एतत्'' इति उक्त्वा बालकृष्णाय उत्तरीयं दत्तवान् ।

बालकृष्णः उत्तरीयं स्वीकृत्य स्कन्धे संस्थाप्य तस्मै सेवकाय एकं रूप्यकम् उपायनरूपेण दत्तवान् । सेवकः धनं प्राप्य विनयेन नमस्कृत्य ततः निर्गतवान् ।

ततः शङ्करः अवदत् - ''सेवकेन उत्तरीयम् आनीय दत्तं यत् तदर्थम् एकरूप्यकात्मकम् उपायनं किमर्थं दत्तं भवता ? अर्धरूप्यकदानम् अपि पर्याप्तम् अभविष्यत्'' इति ।

तदा बालकृष्णः उत्तरीयं स्पृशन् उक्तवान् - ''अमूल्यम् एतत् न मम । इदानीं तु एकरूप्यकदानेन एव प्राप्तं मया । अतः एकरूप्यकं यच्छता अपि मया महान् एव लाभः प्राप्तः'' इति ।

एतत् श्रुत्वा शङ्करः आश्चर्येण स्तब्धः जातः ।





# चतुरक्षः

कृष्णापुरस्य भूस्वामी एकदा अश्वम् आरुह्य ग्रामे सञ्चारार्थं प्रस्थितवान् । एवं सञ्चारसमये गुल्मस्य कस्यचित् पार्श्वे शयनं कृत्वा चतुरः नवजातशिशून् स्तन्यं पाययन्ती काचित् शुनकी तेन दृष्टा । तस्मिन् एव समये कश्चन अश्वशकटः वेगेन अभिमुखम् आगतः ।

भूस्वामिनः अश्वं दृष्ट्वा शकटचालकः दिग्भ्रान्तः भीतः च । भूस्वामिने मार्गं दातुं सः स्वशकटं पार्श्वे नीतवान् । तत्र मार्गः असमः आसीत् । अतः शकटस्य समतोलनत्वं नष्टम् । यावत् स्थितिं समीकर्तुं शकटचालकः प्रयतमानः आसीत् तावता शकटचक्रं शुनक्याः तत्पुत्राणां च उपरि अगच्छत् । त्रयः शुनकशिशवः तदा एव गतप्राणाः । शुनक्याः अपि तादृशी एव गतिः जाता ।

एतत् दारुणं दृश्यं दृष्टवतः भूस्वामिनः हृदयं करुणारसपूर्णं जातम् । सः सजीवं स्थितं शुनकशिशुम् उन्नीय गृहं प्रत्यागतवान् । सेवकेभ्यः तं दत्त्वा - 'जागरूकतया एतं पोषयन्तु' इति अदिष्टवान् च ।

तस्मिन् समये भूस्वामिनः पुरोहितः अपि तत्र आसीत् । सः शुनकशिशुं दृष्ट्वा अवदत् - ''मान्यवर ! एतस्य नेत्रस्य उपरि अधः च कृष्णवर्णं बिन्दुद्वयम् अस्ति । एतादृशः शुनकः चतुरक्षः इति उच्यते । एतादृशः शुनकः अनिष्टकरः इति प्राचीनाः भावयन्ति स्म । दिग्विजययात्रातः पूर्वम् एतादृशः दृष्टः चेत् ते मुसलेन प्रहृत्य मारयन्ति स्म । अतः एतस्य पालनम् अशुभकरम् इति मम भाति'' इति ।

''अन्धश्रद्धा एषा । प्राचीने काले अश्वमेधाङ्गतया अजं बलिरूपेण समर्प्य तदीये नेत्रे सूर्याय, मनः चन्द्राय, कर्णौ दिक्पालकेभ्यः, जीवात्मा प्रजापतये, शरीरं

पञ्चभ्यः भूतेभ्यः च अर्प्यन्ते स्म । कलियुगे पशुयागः निषिद्धः । एवं कालभेदात् विश्वासे अपि भेदाः भवितुम् अर्हन्ति । चतुरक्षः शुनकः अशुभकरः इति भावना भवतु प्राचीनानाम् । किं तेन मम ? मात्रा भ्रातृभिः च विहीनम् एतं निरपराधं शुनकशिशुम् अहं तु निर्दयं मारयितुं न शक्नोमि । दया मानवसहजः गुणः । एषः च दयापात्रम् । भवान् तु पुरोहितः । भूतदया परमश्रेयसे इति शास्त्राणि वदन्ति बहुधा । तत्रापि शुनकः विश्वासप्रतीकभूतः । एतस्यैव मारणार्थं प्रयत्नः सर्वथा अमानवीयः'' इति अवदत् भूस्वामी ।




पुरोहितः निरुत्तरः जातः । भूस्वामी चतुरक्षम् उत्तमाहारादिदानेन पोषितवान् । वर्षाभ्यन्तरे सः सुपुष्टकायः सुन्दरः च जातः । सः भूस्वामिनः गृहपरिसरे सर्वत्र निर्भयतया सञ्चरति स्म । क्वचित् भूस्वामिनः पार्श्वे उपविशति स्म अपि । अपरिचितान् दृष्ट्वा भषति स्म सः । रात्रौ गृहरक्षणम् अपि करोति स्म । प्रतिवेशिगृहाणि अपि रक्षति स्म । बालैः सह सम्यक् क्रीडति स्म । एतस्य सर्वस्य कारणतः सः सर्वेषां जनानां प्रियः जातः ।

किन्तु पुरोहितः एतत् न सहते । शुनकस्य स्पर्शम् अपि अमङ्गलकरं भावयति स्म सः । शुनकः समीपम् आगच्छति चेत् अपि धावति स्म पुरोहितः । एतत् दृष्ट्वा जनाः हसन्ति स्म ।

चतुरक्षः पुरोहितस्य गृहस्य अन्तः अपि सञ्चरति स्म । तद्गृहजनाः तं न निवारयन्ति स्म । दिनेषु गतेषु सः अन्येषाम् इव पुरोहितस्य अपि अनुसरणम् आरब्धवान् । पुरोहितः तं पदे पदे निवारयति स्म । अतः शुनकः तस्य अनुसरणे एव अधिकोत्साहं दर्शयति स्म । एतत् दृष्ट्वा पुरोहितः क्रोधेन वदति स्म - ''पूर्वम् अश्वमेधयागस्य अश्वः स्वच्छन्दतया सञ्चरति स्म । श्वमेधयागः तु केनापि क्रियमाणः नास्ति । तथापि अयं शुनकः तु कस्यापि निग्रहं विना स्वच्छन्दतया सर्वत्र सञ्चरति । मां च सदा पीडयति । पूर्वजन्मनि मया शुनकपीडनम्, अन्यत् किमपि पापं वा आचरितम् इति मन्ये । अतः एव अयं शुनकः मां निरन्तरं बाधते'' इति ।

एकदा पुरोहितः मञ्चे शयितः आसीत् । तदा चतुरक्षः तत्समीपम् आगत्य विचित्रस्वरेण

भषणम् अकरोत् । एतत् श्रुत्वा नितरां क्रुद्धः पुरोहितः दण्डेन तं प्रहर्तुम् उद्युक्तः । अत्रान्तरे तस्य दृष्टिः वातायने पतिता । तत्र कश्चन सर्पः फणां प्रसार्य फूत्कुर्वन् आसीत् । तं दृष्ट्वा शुनकः भषन् आसीत् । समीपे एव सर्पं दृष्टवतः पुरोहितस्य हृदयं स्तब्धम् । सः भीत्या कम्पमानः - ''हा हन्त ! सर्पः, सर्पः'' इति उच्चैः आक्रोशनम् अकरोत् । तत् श्रुत्वा केचन धावन्तः आगतवन्तः । सर्पं च मारितवन्तः ।

पुरोहितेन पूर्वतनी काचित् घटना स्मृता । पूर्वं कदाचित् कासारे स्नात्वा आगमनसमये सः अजागरूकतावशात् सर्पस्य उपरि पादं स्थापितवान् आसीत् । तदा सर्पः तं क्रोधेन दृष्ट्वा ततः निर्गतवान् । एतां घटनां श्रुत्वा बान्धवाः उक्तवन्तः आसन् - 'सर्पः प्रतीकारसाधनार्थं यदाकदाचित् वा आगत्य दंशनार्थं प्रयत्नं कुर्यात् । अतः जागरूकता वरम्' इति । एतत् स्मृत्वा पुरोहितः तस्य दिनस्य शुनकस्य व्यवहारम् अपि अस्मरत् । तस्मिन् दिने आ प्रातः शुनकः तस्य पृष्ठतः एव सञ्चरन् आसीत् । शब्दैः, पाषाणखण्ड-क्षेपणेन वा निवारितः अपि सः न अपगतः एव ।

'मम प्राणरक्षणार्थम् एव अयम् अद्य एवं व्यवहारम् अकरोत्' इति चिन्तयन् पुरोहितः शुनकस्य विषये विशेषप्रीतिमान् जातः ।

सः चतुरक्षं प्रीत्या आलिङ्ग्य - ''भोः, प्राणरक्षक, शुनकमित्र ! सर्वभूतेषु दया प्रदर्शनीया इति शास्त्राणि वदन्ति । अहं शास्त्रज्ञः सन् अपि तत् तत्त्वं विस्मृतवान् आसम् । भवति विशेषतः घृणां प्रदर्शयन् आसम् । तादृशस्यापि मम उपकारं कुर्वता भवता महती श्रेष्ठता प्रदर्शिता । मानवात् मत्तः अपि पशुः भवान् एव श्रेष्ठः जातः'' इति वदन् तस्मै प्रीत्या आहारक्षीरादिकं दत्तवान् ।

एषा घटना भूस्वामिना अपि ज्ञाता । सः पुरोहितम् अवदत् - ''चतुरक्षः अयं मारणीयः इति भवान् उक्तवान् आसीत् । किन्तु सः एव भवतः प्राणरक्षकः जातः । भगवान् कं कीदृशं किमर्थं सृजति इति अस्माभिः न ज्ञायते । फलं ज्ञात्वा एव कारणम् ऊह्यते'' इति ।





# सुवर्णसिंहासनम्-६

*[हैहयवंशीयः राजा सारस्वतः दक्षिणभारतस्य सर्वाणि राज्यानि जित्वा विशालं साम्राज्यं निर्मितवान् । किन्तु तस्य मरणस्य अनन्तरं सर्वे सामन्ताः स्वतन्त्राः जाताः । कालिन्दीराजः माधवसेनः कौण्डिन्यदेशस्य बन्धुः सन् अपि चम्पकराजस्य मरालभूपतेः साहाय्यं कर्तुम् उद्युक्तः जातः । माधवसेनः स्वपुत्रीं श्रीलेखां मरालभूपतिपुत्राय दातुम् इच्छति स्म । किन्तु श्रीलेखा कौण्डिन्यराजकुमारं विजयदत्तं परिणेतुम् इष्टवती । अतः सा गृहात् पलाय्य गान्धर्वविधिना विजयदत्तं परिणीतवती । गुरोः शिवानन्दस्य आदेशस्य अनुगुणं श्रीदत्तः प्रासादसमीपे खननं कारयित्वा सुवर्णसिंहासनं प्राप्तवान् । तस्य रक्षकं सर्पं समुचितोत्तरदानेन जितवान् विजयदत्तः । राज्याभिषेकदिने यदा सः सिंहासनम् आरोढुम् उद्युक्तः तदा प्रथमसोपानस्था सालभञ्जिका तं निरुद्धवती । 'कथा-कथनानन्तरं मया यः प्रश्नः पृच्छ्यते तस्य उत्तरं दत्तं चेदेव अग्रे गमनार्थम् अधिकारः भवतः' इति सन्दिश्य सा कथाम् उक्तवती । कालकेतोः शासनकाले प्रजानां जीवनं कष्टकरं जातम् । क्षामपीडा अपि आरब्धा । तदा वृद्धः भूतपूर्वसेनापतिः श्रीमल्लः प्रतिवेशिराजाय चन्दनवर्मणे पत्रं लिखित्वा प्रार्थितवान् यत् अस्मद्देशः रक्षणीयः इति । तदनन्तरम् .....]*

श्रीमल्लस्य पत्रं प्राप्य राजा चन्दनवर्मा आश्चर्यचकितः दिग्भ्रान्तः च । श्रीमल्लस्य देशप्रेम निःस्वार्थतां च सः सम्यक् जानाति स्म । 'श्रीमल्लः एव पत्रं प्रेषितवान् यत् ततः त्रिपुरान्तकदेशस्य दुरवस्था तावत् सुनिश्चिता । यद्यपि अन्यदेशस्य आन्तरिक-व्यवहारे हस्तक्षेपः दोषाय, तथापि एतदवसरे मम तूष्णीं स्थितिः कर्तव्यलोपाय भवेत् । मानवतादृष्ट्या वा मया त्रिपुरान्तकदेशस्य सुव्यवस्थार्थं कोऽपि उपायः चिन्तनीयः' इति निर्णीय माधवसेनः त्रिपुरान्तकदेशं प्रति गुप्तचरान् प्रेषितवान् ।

गुप्तचराः सर्वविधाः वार्ताः सङ्गृह्य प्रत्यागत्य चन्दनवर्माणं निवेदितवन्तः । ततः चन्दनवर्मा अवगतवान् यत् चित्ररथः यद्यपि राजविरोधं करोति, तथापि तेन महान् जनानुरागः सम्पादितः अस्ति इति । 'संन्यासिनं नमस्कृतवती इत्येकेन एव कारणेन



राजा कालकेतुः पट्टमहिषीं हेमावतीं कारागारे स्थापितवान्' इत्येतां वार्तां ज्ञातवतः तु चन्दनवर्मणः हृदयम् उद्विग्नं जातम् । 'महाराज्ञी हेमावती महासाध्वी । देवस्य पूजनं, संन्यासिषु आदरप्रदर्शनम् इत्यादयः अपि यत्र निषिद्धाः तस्य देशस्य राज्ञः अविवेकिता निश्चयेन खण्डनार्हा । महाराज्ञ्याः एव एतादृशं कष्टं चेत् सामान्यजनानां तत्र का वा कथा स्यात् ? अतः कालकेतुः मया निग्रहणीयः एव' इति निर्णीतवान् चन्दनवर्मा तस्मिन् एव दिने त्रिपुरान्तकदेशं प्रति ससैन्यं गतवान् ।

त्रिपुरान्तकदेशस्य सैन्यम् अल्पं दुर्बलं च आसीत् । अतः विशेषक्लेशं विना एव सः जयं प्राप्तवान् । एवं त्रिपुरान्तकदेशः चन्दनवर्मणः वशः जातः ।

तं देशं वशीकृतवान् चन्दनवर्मा कालकेतुम् आदिष्टवान् यत् नगरसमीपे स्थिते उद्याने सपत्नीकः भवान् वसेत् इति । सः सैनिकान् आज्ञापितवान् यत् चित्ररथः कथञ्चित् वा मत्पुरतः उपस्थापनीयः इति । सैनिकाः समग्रे नगरे अन्वेषणं कृतवन्तः । उद्यानेषु अरण्ये चापि तैः अन्वेषणं कृतम् । किन्तु कुत्रापि चित्ररथः न दृष्टः तैः । ते विविधजनान् अपि एतद्विषये पृष्टवन्तः । तैः पृष्टाः सर्वे एकम् एव उत्तरं वदन्ति स्म - 'एतद्विषये वयं किमपि न जानीमः' इति ।

चन्दनवर्मणः शासनं यदा आरब्धं तदा त्रिपुरान्तकदेशे अपराधाः सर्वथा न्यूनाः जाताः । प्रजानां हितार्थं चन्दनवर्मा विविधान् क्रमान् झटिति व्यवहारे आनीतवान् । अतः सः अल्पे एव काले जनप्रियः जातः ।

चित्ररथस्य अन्वेषणप्रयत्नः विफलः जातः इति यदा ज्ञातं तदा वृद्धः सेनानी श्रीमल्लः चन्दनवर्माणम् उक्तवान् - ''भवतः आक्रमणात् पूर्वम् एव सः रोगग्रस्तः आसीत् इति श्रूयते । सः तु जनप्रियः आसीत् । प्रजानां हितं सः विशेषतः चिन्तयति स्म । अतः मम तु भासते यत् केचित् तं गुप्तस्थाने रक्षन्तः स्युः इति । दण्डभयात् ते अस्मान् किमपि न वदन्ति'' इति ।

चन्दनवर्मा चिन्तितवान् यत् रोगग्रस्तस्य चित्ररथस्य चिकित्सां कोऽपि वैद्यः कुर्वन् स्यात् एव इति । अतः सः सर्वेषां वैद्यानां गृहाणां परिशीलनार्थं गुप्तचरान् नियोजितवान् ।

कदाचित् राज्ञा वार्ता ज्ञाता यत् अश्वमुखः

नाम प्रसिद्धः वैद्यः कस्यचित् चिकित्सां रहस्यरूपेण कुर्वन् अस्ति इति ।

राजा तम् आनाय्य पृष्टवान् - ''भोः, भवान् कस्यचित् चिकित्सां रहस्यरूपेण कुर्वन् अस्ति इति अस्माभिः श्रुतम् । भवता चित्ररथस्य खलु चिकित्सा क्रियमाणा अस्ति ? सत्यं वदतु, अन्यथा भवन्तं कठोरतया दण्डयिष्यामि'' इति ।

एतत् श्रुत्वा अश्वमुखः यद्यपि क्षणकालं भीतः, तथापि अल्पे एव काले आत्मानं निगृह्य सः सधैर्यम् उक्तवान् - ''चित्ररथम् अहं न जानामि एव । तस्य चिकित्सा रहस्यरूपेण मया क्रियमाणा नास्ति अपि'' इति ।



एषः असत्यं वदन् अस्ति इति राजा यद्यपि झटिति अवगतवान्, तथापि तं ततः प्रेषितवान् सः ।

अनन्तरदिने चित्रनेमिनामकः कश्चन उच्चाधिकारी राजानं रात्रौ एकान्ते दृष्ट्वा - ''महाराज ! ह्यः रात्रौ गुप्तरूपेण चिकित्सार्थं गच्छन् अश्वमुखः मया दृष्टः । रहस्यरूपेण तस्य अनुसरणं कृतं मया । अतः चित्ररथः कुत्र निलीय स्थितः अस्ति इति मया ज्ञायते'' इति निवेदितवान् ।

तेन दत्तस्य सङ्केतस्य अनुगुणं चन्दनवर्मा सैनिकैः सह गत्वा चित्ररथं बन्धिनं कृतवान् । चित्ररथस्य वासार्थं प्रासादे एव व्यवस्था कारिता तेन । राजवैद्यद्वारा योग्या चिकित्सा अपि कारिता । यदा चित्ररथः स्वस्थः जातः तदा तं सामन्तपदे प्रतिष्ठापितवान् चन्दन-वर्मा ।

सप्ताहानन्तरं चन्दनवर्मा चित्रनेमिं राज-सभाम् आनाय्य सर्वेषां पुरतः कशाप्रहारैः दण्डयित्वा घोषितवान् यत् अनैतिककार्यं ये कुर्वन्ति ते एवम् एव कठोरतया दण्ड्यन्ते इति ।

अनन्तरं सः आज्ञापयत् - ''चित्ररथः निर्धनदुःखितजनानां साहाय्यं कृतवान् । अतः एव सः प्रजानां प्रीतिपात्रं जातः । तत्कारणतः एव मया सः सामन्तत्वेन नियुक्तः । उत्तम-लक्ष्यस्य साधनार्थं योग्यसाधनानाम् उपयोगम् अकुर्वन्, अनैतिकमार्गं च आश्रयन् सः अपराधम् अपि कृतवान् अस्ति इति तु स्पष्टम् एव । एतस्य प्रायश्चित्तरूपेण चित्ररथ-स्वामिमन्दिरे प्रतिपक्षम् एकादशीदिने तेन भगवतः सेवकत्वम् अङ्गीकुर्वता सम्मार्जनं

करणीयम् । एषः एव तस्य उचितः दण्डः'' इति ।

सालभञ्जिका एवं कथां समाप्य अपृच्छत् - ''विजयदत्त ! चित्ररथः कुत्र आत्मानं निगूहितवान् इत्येतां वार्तां चित्रनेमिः खलु आनीतवान् ? सर्वाः प्रजाः, वैद्यः अश्वमुखश्च सत्यं जानन्तः अपि असत्यम् एव उक्तवन्तः । तथापि राजा चन्दनवर्मा चित्रनेमिं कठोरतया दण्डितवान् । असत्यवक्तृभ्यः दण्डः न विहितः एव तेन । किन्तु यः देशे लुण्ठनादिकं करोति स्म सः सामन्तपदे प्रतिष्ठापितः । एवं तर्हि चन्दनवर्मा सत्यासत्यनिर्णयं केन आधारेण कृतवान् ? सत्यवार्तावक्ता दण्डितः यत् तस्य पृष्ठभूमिकायां किं धर्मसूक्ष्मम् अस्ति ? सत्यवक्तुः दण्डनं यत् कृतम्, असत्यवक्तॄणां प्रोत्साहनं कृतं यत्, लुण्ठनादि-निरतः सामन्तपदे प्रतिष्ठापितः यत्, तत्सर्वं चन्दनवर्मणः व्यवहारविलक्षणतां खलु द्योतयति आपाततः ? किं चन्दनवर्मणः व्यवहारे विलक्षणता नास्ति ? यदि योग्यम् उत्तरं दातुं भवान् शक्नुयात् तर्हि एव प्रथमं सोपानम् आरोढुम् अर्हः भवेत् । अन्यथा सर्वेषु पश्यत्सु, एतत् सिंहासनम् अदृश्यतां गमिष्यति'' इति ।

तदा विजयदत्तः सालभञ्जिकां प्रणम्य अवदत् - ''सत्यात्मरूपिणि देवि ! भवत्या उक्तायां कथायां स्थितस्य राज्ञः चन्दनवर्मणः सर्वाणि आचरणानि धर्माविरुद्धानि, आदर्श-शासकानुगुणानि च सन्ति । विपत्काले चित्ररथः प्रजानां साहाय्यं कृतवान् ।



अत्याचारान्याय्यादिव्यवहारैः सन्तप्तानां सान्त्वनं च कृतवान् सः । यद्यपि तेन चितः मार्गः अनुचितः आसीत्, तथापि तदीयं कार्यं तु देशभक्तिपूर्णम् एव आसीत् । मानवता, परोपकारः, दया, करुणा इत्यादयः उदात्ताः गुणाः तस्य व्यवहारे आसन् । सामान्याः जनाः आहाराभावतः म्रियमाणाः आसन्, तथापि केचन स्वार्थपराः अक्रममार्गेण आहारसङ्ग्रहणे, अधिकमूल्येन तस्य विक्रयणे च उद्युक्ताः आसन् । एतत् सर्वथा न असहत चित्ररथः । आहाराभावं कृत्रिमतया सृजतः जनान् निगृह्य सः बलात्कारेण आहारादि-पदार्थान् वशीकृतवान् । तेन सामान्याः जनाः कदापि न पीडिताः । अतः तस्य कृत्यं चौर्यत्वेन निर्देष्टुं न शक्यते अस्माभिः । वस्तुतः चित्ररथेन कर्तव्यं पालितं, सत्यं च पोषितम् । चन्दनवर्मा एतत्सर्वम् अवगत्य एव तं पुरस्कृतवान् । तम् अदण्डयता तेन धर्मः सत्यं च रक्षितम् ।

प्रजासु बहवः चित्ररथस्य वासं व्यवहारं न जानन्ति स्म । तथापि दण्डभयात् 'वयं किमपि न जानीमः' इति असत्यम् उक्तवन्तः ते । असत्यकथनस्य मूलोद्देशः – अभिमानः कृतज्ञताभावः च । दया मानवत्वं च तेषां व्यवहारे स्फुटः । अतः असत्यम् उक्तवन्तः अपि ते न दण्डिताः राज्ञा ।

भ्रष्टाः सुखलोलुपाः अधिकारिणः सदापि प्रजाहितकारिणां द्वेषं कुर्वन्ति । यतः प्रजाहितचिन्तकाः भ्रष्टानां स्वार्थसाधने विघ्नम् आचरन्ति । 'चित्ररथः दण्डितः भवतु' इति उद्देशेन एव ईर्ष्याप्रेरितः चित्रनेमिः चित्ररथस्य



रहस्यवासस्थानं महता प्रयत्नेन ज्ञात्वा राजानं निवेदितवान् । अतः एव सत्यवार्तां निवेदित-वन्तम् अपि तं दण्डितवान् चन्दनवर्मा । चन्दनवर्मणः एषः निर्णयः अपि सत्य-न्यायानुगुणः एव ।

मनः, वचनं, कर्म इत्येतानि मानवस्य आचरणस्य त्रीणि अङ्गानि । तेषु मनसः एव प्राधान्यम् । कदाचित् वचनं कर्म च सत्योपेततया भासते, तथापि मनसः परिशुद्धतायाः अभावे तत् आचरणं कपटत्वेन एव परिगणनीयम् । सत्यासत्ययोः सूक्ष्मभेदं यः अवगन्तुं शक्नोति सः एव प्रजाहितं साधयेत् । चन्दनवर्मा तादृशः श्रेष्ठः राजा । प्रजाहितं मनसि निधाय एव तेन निर्णयः कृतः । चित्ररथः अनैतिकं मार्गं यत्



आश्रितवान् तस्य कारणतः तस्य दण्डनमपि स्यात् एव खलु ? तदर्थं राजा भगवत्सेवारूपं पवित्रं दण्डनं विहितवान् । एतद्द्वारा सः जनान् ज्ञापितवान् यत् लक्ष्यम् उच्चं पवित्रं च यथा भवेत्, तथैव लक्ष्यसाधनार्थं चितः मार्गः अपि न्यायोचितः पवित्रः च स्यात् इति । मनसा वचसा कर्मणा च सत्यमार्गः एव अनुसरणीयः इत्येतत् एव चन्दनवर्मणः व्यवहारस्य तात्पर्यम् । यदि कदाचित् चन्दनवर्मणः स्थाने अहं भवेयम्, तर्हि अहम् अपि एवम् एव निर्णयं कृतवान् भवेयम्'' इति ।

''साधु विजयदत्त ! साधु ! मम प्रश्नानां समुचितम् उत्तरं यच्छता भवता प्रथमसोपानारोहणार्थम् अर्हता प्रदर्शिता अस्ति । स्वागतं भवतः'' इति अवदत् प्रथमा सालभञ्जिका ।

तस्याः वचनं श्रुत्वा सभासदः सर्वे जयकारं कृतवन्तः । महाराजः श्रीदत्तः अग्रे गत्वा पुत्रं महत्या प्रीत्या आलिङ्गितवान् । आनन्दतुन्दिलायाः श्रीलेखायाः नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि । वाद्यवादकैः मङ्गलवाद्यानि वादितानि । अनन्तरं विजयदत्तः प्रथमसोपानम् आरूढवान् । सोपानारोहणसमये सालभञ्जिकायाः कोऽपि विरोधः न आसीत् इत्यतः सभासदः सर्वे तृप्त्या निश्श्वसितवन्तः ।

अत्र एवं सर्वेषु आनन्देन स्थितेषु, तत्र कालिन्दीदेशे महाराज्ञी वसुमती अपि अव्यक्तेन आनन्देन पुलकिता जाता । तत्र कारणं - तस्मिन् दिने उषसि तया दृष्टः शुभसूचकः स्वप्नः ।

तस्मिन् एव समये पतिः माधवसेनः तस्याः समीपम् आगत्य अवदत् - ''देवि ! कौण्डिन्यदेशतः आगतः कश्चन दूतः एकां शुभवार्ताम् आनीतवान् अस्ति । विजयदत्तः गुरुकुलतः यदा प्रत्यागतः तदा तत्र खननकार्यं प्रवृत्तम् इति श्रूयते । तत्र एकम् अपूर्वं सुवर्णसिंहासनं लब्धम् इति वार्ता । अचिरात् एव विजयदत्तः पट्टाभिषिक्तः भवेत् इति वदति दूतः । श्रीलेखा उत्तमे मुहूर्ते एव कौण्डिन्यदेशे पदं स्थापितवती इति भाति । अतः सर्वं मङ्गलमयं जायमानम् अस्ति । सर्वं भगवतः कृपा'' इति ।

एतत् श्रुत्वा वसुमती - 'मम स्वप्नः फलितः' इति चिन्तयन्ती सन्तोषातिरेकेण

भगवन्तं नमस्कृतवती । पूजां समाप्य सा पतिं माधवसेनम् उक्तवती - ''अपूर्वम् उपायनं विजयदत्ताय दत्तवान् भगवान् तस्य रक्षण-भारम् अपि निर्वहेत् एव इति अहं भावयामि । सुवर्णसिंहासनप्राप्त्यादयः वार्ताः गूढचरद्वारा यथा अस्माभिः अद्य प्राप्ताः, तथैव मराल-भूपतिना अपि प्राप्ताः स्युः एव खलु ?'' इति ।

''प्राप्ताः स्युः एव । न जाने, अग्रे किं भविष्यति इति । अद्य रात्रौ एव अस्माकं युद्धप्रयाणस्य आरम्भः । मया तु मराल-भूपतिना सह गन्तव्यम् एव । एतेन श्रीदत्तादयः मद्विषये अन्यथाभावं निश्चयेन प्राप्नुयुः । अहो दुरवस्था मम'' इति सातङ्कम् उक्तवान् माधवसेनः ।

''अलं चिन्तया । सर्वं मङ्गलमयम् एव भविष्यति इति मम भाति । यदि वयं कपोत-द्वारा अन्यां वार्ताम् अपि अद्य एव प्रेषयेम तर्हि अग्रजः विजयदत्तः च अस्मद्विषये अधिकविश्वासं प्राप्नुयाताम्'' इति उक्तवती वसुमती ।

''अस्तु तर्हि । 'सुवर्णसिंहासनम् आरोढुम् उद्युक्ताय विजयाय शुभाशीर्वादाः' इत्येतं सन्देशम् अद्यैव कपोतद्वारा प्रेषयिष्यामि'' इति पत्नीम् उक्त्वा अन्तःपुरतः निर्गतवान् माधवसेनः ।

तेन प्रेषितः वार्तावाहकः कपोतः वायुवेगेन आकाशमार्गेण सञ्चरन् यावत् कौण्डिन्यदेशं प्राप्नोत् तावता विजयदत्तः सुवर्णसिंहासनस्य प्रथमसोपाने स्थितायाः सालभञ्जिकायाः प्रश्नानाम् उत्तरम् उक्त्वा द्वितीयायाः साल-भञ्जिकायाः कथां श्रोतुं सन्नद्धः जातः आसीत् ।

प्रथमसोपाने स्थितं तं द्वितीया साल-भञ्जिका अवदत् - ''विजयदत्त ! मम भगिनी यथा सत्यरूपिणी, तथैव अहं धर्मस्वरूपा । अहम् अपि कथां श्रावयित्वा प्रश्नं प्रक्ष्यामि । तां श्रोतुम् उत्तरं वक्तुं च सिद्धः भवतु भवान्'' इति ।

- *(अनुवर्तते)*



# ५. नर्मदात्री नर्मदा

''यदा वयं वटोदरायाम् आस्म तदा मम वयः किम् आसीत् ?'' सन्दीपः मातरं जयश्रियम् अपृच्छत् ।

''तदानीं तु भवान् त्रिवर्षीयः आसीत् । तथापि तत्र स्थितिं भवान् स्मरति इति तु आश्चर्याय'' - जयश्रीः अवदत् ।

''वटोदरावासः आधिक्येन न स्मर्यते अम्ब! तथापि वयम् एकदा नदीतीरस्थे भवने रात्रौ स्थितवन्तः खलु, तत् तु सम्यक् स्मरामि । तदा पिता माम् उन्नीय भवत्या सह, नदीतीरे विहारार्थं गतवान् उषसि । यदा सूर्योदयः जातः तदा नद्याः जलं सुवर्णवर्णीयं जातम् । भवन्तौ बालसूर्यम् आनन्देन पश्यन्तौ मह्यम् अपि तं दर्शितवन्तौ । तदेव शान्त-निर्मलसुन्दरदृश्यं मम स्वप्ने शताधिक-वारम् आगतं स्यात्'' इति अवदत् सन्दीपः ।

चमेली-सन्दीपौ उपाहारं सेवमानौ मात्रा सह सम्भाषणरतौ आस्ताम् । पार्श्वे उपविष्टः पितामहः प्रा॰ देवनाथवर्यः सर्वं कुतूहलेन शृण्वन् आसीत् ।

''किन्तु तात ! तादृशं भव्यं सूर्योदयम् अहं कुतः पुनः कदापि द्रष्टुं न शक्तः ?'' इति अपृच्छत् सन्दीपः ।

''सुर्योदयः सर्वदा भव्यः भवति एव वत्स ! पूर्वम् अपि सः भव्यः आसीत्, अग्रे अपि तथैव भविष्यति अपि । भवता यः सूर्योदयः सदा स्मर्यते स तु ऐदम्प्राथम्येन सध्यानं दृष्टः आसीत् । भवदीयौ मातापितरौ अपि तस्य सौन्दर्यस्य प्रदर्शने उत्सुकौ आस्ताम् । अतः स च क्षणः भवतः स्मृतौ अङ्कितः अस्ति ।''

''वयं तदा नर्मदानद्याः तीरे स्थिते कस्मिंश्चित् आश्रमे वासं कृतवन्तः आस्म । आश्रमं परितः विशालाः प्राचीनाः वृक्षाः अपि



आसन् । नितरां मनोहरं दृश्यम् आसीत् तत्'' जयश्रीः तद्दिनं स्मरन्ती उक्तवती ।

''तात! भवान् किमपि वक्तुम् इच्छति इति भाति'' जिज्ञासया पृष्टवान् सन्दीपः ।

''आम् । एतदवसरे मनसि कश्चन विचारः आगतः । किन्तु स च गहनः । अतः तस्य कथनानन्तरम् अपि बाल्यकारणतः भवान् तस्य तात्पर्यम् अवगन्तुं न शक्नुयात् कदाचित् ।''

''सन्दीपं मा कथयतु तात ! स तु बालः । अहं न तथा । अतः एव पिता मां तदा तदा वृद्धां निर्दिशति'' इति मौग्ध्यभावेन उक्तवती चमेली ।

देवनाथवर्यः उच्चैः हसित्वा - ''भवतोः उभयोः अपि बुद्धिः तीक्ष्णा इत्यत्र मम पूर्णविश्वासः अस्ति । यत् मनसि आगतं तत् यदि अद्य न कथयेयं तर्हि भवतोः पीडातः मम मुक्तिः न स्यात् । अतः सरलतया वक्तुं प्रयासं करिष्यामि'' इति कथयन् कथाम् आरब्धवान् ।

''मानवः शरीरप्राण-मनोमयमात्ररूपः न । प्राणानाम् अभावे शरीरम् असारं भवति । प्राणाः यदा शरीरे भवन्ति तदा इच्छानिच्छादयः उत्पद्यन्ते । यदि मानवे मनः न अभविष्यत् तर्हि सः पशुसमानः अभविष्यत् । मनः



सदसद्ज्ञानार्थं मार्गं कल्पयति । सः एव विवेकः इति उच्यते । मानवे स्थितं सर्वश्रेष्ठं तत्त्वम् अस्ति - आत्मा । आत्मनः उपस्थितेः कारणतः एव मनुष्यः भगवत्प्राप्तिदिशि सरति । दिव्यात्मनः स्थितिः एव मानवं रामं कृष्णं वा करोति, बुद्धं, विवेकानन्दं वा करोति ।

मानवस्य वास्तविकं स्वरूपम् एव एतत् । प्राणमनश्शरीराणि आत्मनियन्त्रितानि । सेवकरूपाणि तानि । किन्तु आत्मा यदि विकसितः न भवति तर्हि प्राणाः मनश्चैव मानवं नियन्त्रयन्ति । बाल्ये आत्मशक्तिः अन्यप्रभावविनिर्मुक्ता भवति । अतः एव सुन्दरं पवित्रं च वस्तु दृष्ट्वा सा द्रवीभवति । प्रेम स्नेहं च दृष्ट्वा समुचितप्रतिस्पन्दं दर्शयति । किन्तु मानवः यथा यथा वर्धते तथा तथा स्वार्थादयः मनश्शक्तिम्, आवेगकामनादयः च प्राणशक्तिम् आवृण्वन्ति ।...'' इति एतावत् उक्त्वा अपृच्छत् देवनाथवर्यः - ''मया उच्यमानम् अवगम्यते खलु ?'' इति ।

''अहं सम्यक् अवगच्छन्ती अस्मि । अहं बाला अस्मि । अतः मम आत्मशक्तिः सर्वथा अन्य-प्रभावविनिर्मुक्ता स्वच्छा च । अतः कुतूहलकरं विषयं भवान्

यं वदन् अस्ति सः साक्षात् मम आत्मानं स्पृशति'' – हसन्ती उक्तवती चमेली ।

सन्दीपस्य मनः गम्भीरचिन्तने मग्नम् इव दृश्यते स्म । सः गाम्भीर्येण एव अपृच्छत् – ''तात ! गङ्गायाः इव यमुनायाः विषये अपि रोचिका कथा स्यात् खलु ?'' इति ।

''भारतस्य सर्वासां नदीनां विषये



रोचिकाः कथाः सन्ति एव । नर्मदायाः कथा तु मधुरा काव्यमयी च'' – देवनाथवर्यः अवदत् । ततः सः कथाम् अनुवर्तितवान् ।

एकदा अमरकण्टकपर्वते भगवान् शिवः दीर्घकालं यावत् समाधिमग्नः आसीत् । तदा तदीया या शान्तस्थितिः सम्मोहकाकृतिः च आसीत् ततः एका सुन्दरी कन्या समुत्पन्ना । तरुणीरूपा सा जन्मदातारं शिवं भक्त्या नमस्कृतवती । तदा शिवः अवदत् – ''वत्से, भवती मम हृदयस्य नर्म (सुखं=सुन्तोषं) कल्पितवती । अतः भवतीं नर्मदां निर्दिशामि । मत्तः कीदृशं वरम् इच्छाति भवती ?'' इति ।

''अहं सर्वदा स्वतन्त्रा भवितुम् इच्छामि आर्य !'' इति अवदत् सा ।

''तथास्तु'' इति उक्त्वा ताम् आशिषा अनुगृहीतवान् शिवः ।

नर्मदा वनेषु पर्वतेषु च नृत्यन्ती गायन्ती स्वेच्छया सञ्चारम् आरब्धवती ।

अचिरात् एव तस्याः सौन्दर्येण बहवः देवाः आकृष्टाः अभवन् । कश्चन देवः तस्याः पुरतः प्रत्यक्षीभूय तां ग्रहीतुम् उद्युक्तः । झटिति नर्मदा जलरूपं प्राप्य तस्य अङ्गुलिसन्धितः निर्गत्य नदीरूपेण ततः धावितवती ।

एवं विष्णोः लावण्यतः नर्मदा निष्पन्ना'' इति वदन् कथां समापितवान् देवनाथवर्यः ।

''नितराम् अपूर्वा एषा कथा'' इति अवदत् सन्दीपः । चमेली करताडनेन सन्तोषं प्रकटितवती ।

''भारतीयनदीनां वनानां च विषये याः कथाः श्रूयन्ते ताः प्रायः प्रतीकात्मिकाः । किन्तु गच्छता कालेन जनैः प्रतीकात्मकता विस्मृता'' इति खेदेन अवदत् देवनाथवर्यः ।

''कथामात्ररूपाः अपि एताः नितरां रोचिकाः सन्ति'' इति अवदत् सन्दीपः ।

''गङ्गायमुनादीनि, एतासां नामानि चापि अतिमधुराणि'' इति अवदत् चमेली ।

''भारतस्य विभिन्नस्थानानां प्राचीन-नामानि अपि मधुराणि एव । पटनानगरस्य



प्राचीनं नाम किम् इति किं ज्ञायते ?'' अपृच्छत् देवनाथवर्यः ।

''पाटलीपुत्रम् इति'' इति युगपत् उक्तवन्तौ चमेली सन्दीपः च ।

''तस्य प्राचीनतमं नाम कुसुमपुरम् पुष्पपुरम् इति वा आसीत् । ट्रिवेण्ड्रम् इत्येतस्य प्राचीनं नाम 'तिरु-अनन्त-पुरम्' इति । इदानीं तेनैव नाम्ना व्यवहारः प्रचलति । एतस्य पदस्य अर्थः - पूज्यस्य अनन्तस्वामिनः पवित्रनगरम् इति । द्वारका, द्वारावती इति निर्दिश्यते स्म । गुलमार्ग इत्येतस्य प्राचीनं नाम गौरीमार्गः इति । लखनऊनगरं लक्ष्मणपुरनाम्ना निर्दिश्यते स्म । गौहाटि प्राग्ज्योतिषपुरनाम्ना निर्दिश्यते स्म । गोवा गोमान्तकपुरनाम्ना, पाण्डिचेरी वेदपुरीनाम्ना च निर्दिश्यते स्म । मधुरा मधुरनगरी इति, अजमेर अजयमेरुः इति च सूच्यते स्म । कुलुखातः कुलान्तपीठनाम्ना निर्दिश्यते स्म । एवं बहूनां प्राचीननामानि सुन्दराणि अर्थगर्भितानि च आसन् ।''

किञ्चित्कालानन्तरं सः पुनः अवदत् - ''राज्यानां नामानि अपि अर्थपूर्णानि । यस्य नाम कर्णेषु अटति तत् कर्णाटकम् । पञ्च आपः (नद्यः) यस्मिन् प्रवहन्ति तत् पञ्जाबराज्यम् । बौद्धविहाराणां केन्द्रम् एव बिहारराज्यम् । कश्यपऋषेः नामसम्बन्धात् कश्मीरनाम निष्पन्नम् ।''

''जम्मू इति नाम कथं निष्पन्नम् ?''

''जम्बुलोचनः नाम कश्चन राजा नवमे क्रिस्तशतके आसीत् । ततः जम्मू इति नाम आगतम् । एवं नगराणां स्थलानां च नामानि राज्ञाम् ऋषीणां च सम्बन्धं वहन्ति । ग्वालियर् इत्येतत् नाम ग्वालिपमुनिसम्बन्धि । नागार्जुन-कुण्डं बौद्धभिक्षोः नागार्जुनस्य सम्बन्धं वहति । जबलपुरं जाबालिऋषेः सम्बन्धम् आवहति । एवम् एषा आवली सुदीर्घा अस्ति'' इति उक्त्वा देवनाथवर्यः उत्थितः । यतः बालयोः शालागमनसमयः आसन्नः आसीत् ।



# वाणिज्यरहस्यम्

हेलापुरीग्रामे आञ्जनेयश्रेष्ठिनः आपणः सुप्रसिद्धः । शुद्धानि वस्तूनि तत्र प्राप्यन्ते स्म । तोलने वञ्चना न आसीत् । मूल्ये अपि न्यूनता न आसीत् । अतः सर्वे ततः एव वस्तूनि क्रीणन्ति स्म । आञ्जनेयश्रेष्ठिनः प्रशंसां च कुर्वन्ति स्म ।

अथ कदाचित् सुगन्धपुरनामकात् ग्रामात् आगतः गिरिधरश्रेष्ठी आञ्जनेयश्रेष्ठिनः आपणस्य पुरतः एव स्वकीयम् आपणम् आरब्धवान् । अल्पे एव काले तस्य वाणिज्यं प्रवृद्धम् । आञ्जनेयश्रेष्ठिनः प्राचीनग्राहकाः अपि गिरिधरश्रेष्ठिनः आपणं गन्तुम् उद्युक्ताः अभवन् । एतस्मात् आञ्जनेयश्रेष्ठिनः वाणिज्ये मन्दता आगता ।

'आपणद्वये अपि शुद्धानि एव वस्तूनि प्राप्यन्ते । तोलने अपि वञ्चना नास्ति । व्यवहारः अपि उत्तमः एव । तथापि किमर्थं मम आपणस्य वाणिज्ये ह्रासः जातः ?' इति बहुधा चिन्तितवान् आञ्जनेयश्रेष्ठी । कारणं तेन न ज्ञातम् । अतः सः गिरिधरश्रेष्ठिनम् एव दृष्ट्वा विवरणं पृष्टवान् ।

तदा गिरिधरश्रेष्ठी अवदत् - ''भवता वाणिज्यरहस्यम् एव पृष्टम् । वस्तुतः एतत् अन्यं न वदामि अहम् । भवान् तु वृत्तिबन्धुः इत्यतः वदामि । तोलनसमये भवान् आदौ वस्तूनि आधिक्येन स्थापयति । ततः वस्तुभारं न्यूनीकुर्वन् समतोलनतां सम्पादयति । ग्राहकः यद्यपि अपेक्षितभारात्मकं वस्तु एव प्राप्नोति, तथापि 'भवता न्यूनं दीयते' इति चिन्तयति । अहं तु तथा न करोमि । आदौ न्यूनं स्थापयामि । ततः वस्तुस्थापनं मन्दगत्या वर्धयन् समतोलनतां सम्पादयामि । मया अपि वस्तु आधिक्येन न दीयते । तथापि ग्राहकाः चिन्तयन्ति यत् मया अधिकं दीयते इति । एतत् एव वाणिज्यरहस्यं नाम'' इति ।

ततः आञ्जनेयश्रेष्ठी अपि गिरिधरश्रेष्ठिनः तन्त्रम् एव आश्रितवान् । अतः तस्य आपणे अपि वाणिज्यं प्रवृद्धम् । ततः उभौ अपि वणिजौ प्रतिस्पर्धिभावं परित्यज्य सहोदरभावेन वाणिज्यं कुर्वन्तौ सुखेन जीवितवन्तौ ।





# व्यवस्थानिर्वहणकौशलम्

रमापतिः रामनाथपुरस्य प्रसिद्धः वणिक् । प्रभूता सम्पत्तिः सम्पादिता आसीत् तेन । तथापि काचित् अनिर्ज्ञातचिन्ता तं सदा बाधते स्म । वैद्यानां द्वारा तेन चिकित्सा कारिता । बहूनां मार्गदर्शनं प्राप्तम् । तथापि तदीयः रोगः तु न उपशान्तः ।

कदाचित् कश्चन संन्यासी तस्य गृहम् आगतः । रमापतेः सेवया सन्तुष्टः सः आशीर्वादपुरस्सरम् उक्तवान् - ''भवान् नितरां सज्जनः । कार्यं श्रद्धया निष्ठया च क्रियते भवता । परमात्मा भवन्तम् अनन्तसुखेन अनुगृह्णातु'' इति ।

''सुखं मम ललाटे लिखितं नास्ति इति भाति । अहं कार्ये सदा अवधानवान् भवामि । तथापि, न जाने, केभ्यश्चित् मासेभ्यः मम मनः किमर्थम् अशान्तं तिष्ठति इति । बहुधा चिन्तनेनापि एतस्य कारणं मया न ज्ञातम्'' इति उक्तवान् रमापतिः ।

रमापतेः खेदं ज्ञात्वा संन्यासी आश्चर्यचकितः । खेदकारणं ज्ञातुं सः रमापतिं विविधान् प्रश्नान् पृष्टवान् । रमापतेः उत्तराणां श्रवणतः ज्ञातं यत् तदीयं पारिवारिकसुखम् उत्तमम् एव अस्ति, असन्तोषकलहादिकं किमपि तत्र नास्ति इति ।

अतः सः किञ्चित् विचिन्त्य अपृच्छत् - ''एतस्मात् नगरात् अन्यत्र किं भवतः काऽपि सम्पत्तिः अस्ति ?'' इति ।

''आं महास्वामिन् ! पञ्चसु ग्रामेषु मम कृषिभूमयः सन्ति । तत्रत्याः कृषिकाः एव तासां निर्वहणव्यवस्थां सम्यक् निर्वहन्ति । प्रातिवार्षिकदेयम् अपि विना लोपम् आनीय मह्यं यच्छन्ति'' इति अवदत् रमापतिः ।

''एतासां कृषिभूमीनां कारणतः यत्र क्वापि असन्तोषः किं कोऽपि जातः ? स्मृत्वा वदतु'' इति अवदत् संन्यासी ।

किञ्चित्कालं विचिन्त्य अवदत् रमापतिः - ''विदुरपुरे मम पितृव्यः एकं राममन्दिरं निर्मापितवान् आसीत् । तस्य व्यवस्था-

भामहः



निर्वहणार्थं विशाला भूमिः दानरूपेण दत्ता तेन । तस्मिन् मन्दिरे प्रतिवर्षं रामोत्सवः भव्यरूपेण प्रचलति स्म पूर्वम् । किन्तु सा भव्यता इदानीं नष्टा । ततः मम खेदः जातः इति तु सत्यम् । तथापि सः मम अशान्तेः कारणं तु न । यतः तत्रत्यं फलाफलं रामाय एव अर्पितं मया'' इति ।

एतत् श्रुत्वा संन्यासी हसन् अवदत् – ''फलाफलं भगवते अर्पितम् इति भावितं चेत् कर्तव्यं न समाप्यते खलु ? भवान् तु मन्दिरे स्थितायाः अव्यवस्थायाः समीकरण-भारं भगवति आरोपितवान् । एतत् एव भवतः अशान्तेः मूलकारणम्'' इति ।

''तथा न स्यात् इति मम भाति । गते वर्षे अहं सपत्नीकः गत्वा तत्रत्यां परिस्थितिं परिशील्य आगतवान् । सर्वम् अपि सम्यक् एव अस्ति इति मम अभासत । लोपः कस्मिन् अंशे इति मया न अवगतम् । अतः मया मौनम् आश्रितम्'' इति अवदत् रमापतिः ।

''पूर्वजेषु यादृशी रामभक्तिः आसीत् तादृशी भवति न दृश्यते । अतः एव भवान् लोपस्य कारणम् अज्ञात्वा एव प्रत्यागतः । यावत् तत्र रामोत्सवः सवैभवं न प्रचलिष्यति तावत् भवतः मनसः अशान्तिः न अप-गमिष्यति'' इति अवदत् संन्यासी ।

''रामोत्सवः सवैभवं प्रचलेत् इति तु अन्यः विषयः । तस्य मम मनसः अशान्तेः च सम्बन्धं कमपि अहम् इतोऽपि न पश्यामि'' इति स्वस्य आशयं विशदीकृतवान् रमापतिः ।

तदा संन्यासी मन्दहासपूर्वकम् अवदत् – ''वत्स ! मन्दिरस्य निर्माणं यज्ञसमम् । मन्दिरे भगवतः उपस्थितिः विशेषतः भवति । मन्दिरव्यवस्थायाः कारणतः तत्र उद्योगे नियुक्तानां जीविका अपि प्रचलति । एतस्यां व्यवस्थायां लोपः कोऽपि यथा न भवेत् तथा करणं भवतः कर्तव्यम् । एतत् कर्तव्यं सम्यक् करणीयम् इति भवतः मनः इच्छति । किन्तु तत् कृतं न भवति । अतः पुनरपि तत्र गत्वा व्यवस्थाभागः सुसूक्ष्मं परिशीलनीयः भवता । योग्याः जनाः व्यवस्थायां नियोज-नीयाः । तत्रत्या व्यवस्था दोषरहिता भवति चेत् एव भवतः अशान्तिः अपगच्छेत्'' इति अवदत् संन्यासी ।

''मन्दिरस्य व्यवस्था उत्तमजनानाम् आधीन्ये एव अस्ति इति मम दृढः विश्वासः अस्ति । एवं स्थिते अपि कोऽपि लोपः

कथमपि जायमानः अस्ति इति तु आश्चर्याय'' इति वदन् रमापतिः तत्रत्यां व्यवस्थां विवृतवान् - ''तत्र चत्वारः अर्चकाः सन्ति । रामं सीताम् आञ्जनेयं च तेषु एकैकः पूजयति । चतुर्थः वेदपारायणं करोति निरन्तरम् । श्रीरामसङ्कीर्तनार्थं चत्वारः सङ्गीतज्ञाः नियुक्ताः सन्ति । पुराण-प्रवचनादिनिमित्तम् एकः कथावाचकः अस्ति । कृष्यादिकार्यार्थं दश कृषिकाः सन्ति । आयव्ययादिगणनां द्रष्टुं द्वौ लिपिकारौ स्तः । एतां समग्रां व्यवस्थां गतवर्षपर्यन्तं राजशेखरः नाम कश्चन वृद्धः परिशीलयति स्म । तस्य परिवारजनः कोऽपि न आसीत् इत्यतः अहोरात्रं सः मन्दिरे एव निवसति स्म । तस्य दिवङ्गतेः अनन्तरम् उद्दालकाचार्यनामकः कश्चित् तां व्यवस्थां निर्वहति । एते सर्वे स्वकार्ये समर्थाः विश्वासार्हाः च'' इति ।

''उद्दालकाचार्यस्य नियुक्तेः अनन्तरम् एव तत्र व्यवस्थायां शैथिल्यम् आगतं स्यात् ननु ?'' इति अपृच्छत् संन्यासी ।

''उद्दालकाचार्यः असमर्थः अविश्वासार्हः वा न । सर्वतोमुखसामर्थ्यं तस्य । आवश्यकतायां सत्यां सः पाकम् अपि करोति । सम्मार्जने अपि नास्ति सङ्कोचः तस्य । मन्दिरस्य स्वच्छतां सर्वदा रक्षति सः । शास्त्रसाहित्यादिषु तस्य ज्ञानम् उत्तमम् अस्ति । सङ्गीतज्ञानं वहन् सः वेदज्ञः अपि । गणनाव्यवहारे अपि तस्य नैपुण्यम् अस्ति । विश्वासार्हता तु प्रश्नातीता । तादृशः समर्थः अन्यः कोऽपि न लभ्यते इति विदुरपुरीयाः सर्वे तस्य प्रशंसां कुर्वन्ति ।''



''एतस्य तात्पर्यं सिद्धं यत् सः राजशेखरात् अपि श्रेष्ठः इति'' इति अवदत् संन्यासी ।

''न तथा । राजशेखरवर्यस्य जीवने रामात् अन्यः कोऽपि विषयः न प्रविशति स्म ।''

''भवतः कथनं वस्तुस्थितितः भिन्नम् अस्ति इति भाति मम । तत्र गत्वा स्थितिः दृष्टा चेदेव समस्यायाः मूलम् अवगतं भवेत् । अतः आवां विदुरपुरं गच्छाव । समस्यानिवारणार्थम् अहं यथाशक्ति साहाय्यं करिष्यामि'' इति उक्तवान् संन्यासी ।

ततः उभौ अपि विदुरपुरं गतवन्तौ । तत्र सर्वस्य परिशीलनात् स्पष्टम् अभवत् यत् उद्दालकाचार्यः सुयोग्यः एव इति । तदा तस्य विषये अन्यत् अपि ज्ञातं यत् पत्न्याः विषये विशेषप्रीतिमान् सः पत्न्या सूचितेषु कार्येषु

एव अधिकव्यापृतः भवति इति ।

तस्य पत्नी सुशीला उत्तमा महिला एव । रामे विशेषभक्तिः अपि अस्ति तस्याः । परोपकारे अपि आसक्तिः तस्याः । भक्तगणे मम अभिज्ञानं विशेषतः स्यात् इति तस्याः प्रबला इच्छा । अतः सा सङ्कीर्तनम्, अन्नदानं, वस्त्रदानम् इत्यादीन् कार्यक्रमान् प्रतिदिनम् अपि व्यवस्थापयितुम् इच्छति । किन्तु सा एकाकिनी तत् सर्वं निर्वोढुं न शक्नोति । अतः पतिं साहाय्यं याचते । तस्याः कार्यक्रमाणां व्यवस्थापने व्यग्रः उद्दालकाचार्यः क्वचित् मन्दिरकार्याणि समये निर्वर्तयितुं न शक्नोति । क्वचित् सा मन्दिरस्य उद्योगिनः अपि स्वकार्ये योजयति । एतस्य सर्वस्य परिणामतः मन्दिरव्यवस्थायां शैथिल्यं दृश्यते ।

एतत् सर्वं ज्ञात्वा संन्यासी रमापतिम् अवदत् - ''लोपः कुत्र इति तु स्पष्टम् । अतः रमापतेः स्थाने तदीया पत्नी सुशीला एव नियोज्यते चेत् समस्या परिहृता भविष्यति'' इति ।

''किन्तु मन्दिरव्यवस्थानिर्वहणे तस्याः कौशलम् अनुभवः वा सर्वथा नास्ति खलु !'' इति अवदत् रमापतिः ।

''किं तेन ? यद्यपि तस्याः तादृशं सामर्थ्यं नास्ति, तथापि सा सामर्थ्यवतः द्वारा कार्यसम्पादनकलां जानाति । गौरवप्राप्तीच्छा तस्याः प्रबला अस्ति । व्यवस्थापकपदे नियोजनेन तस्याः सा अपेक्षा पूर्णा भवति । ततः तृप्ता सा उद्दालकाचार्यद्वारा कार्याणि कारयिष्यति । उद्दालकाचार्यः तु पदाभावे सत्यपि पत्नीप्रेम्णा कार्यं कुर्यात् एव । अतः समस्या निश्चयेन परिहृता भविष्यति'' इति सविश्वासम् अवदत् संन्यासी ।

संन्यासिना यथा सूचितं तथैव कृतवान् रमापतिः । ततः अल्पे एव काले राममन्दिरे पूर्वतनं वैभवं दृष्टिगोचरं जातम् । सर्वे सुशीलायाः सामर्थ्यं प्रशंसन्ति स्म इत्यतः सुशीला तृप्ता जाता । पत्न्या सूचितस्य कार्यस्य करणात् एव स्वस्य सार्थक्यं भावयन् उद्दालकाचार्यः अपि मन्दिरकार्ये आत्मानं पूर्णतः नियोजितवान् ।



# कावेरीतीरप्रयाणम् -८

# प्राचीनः जलबन्धः

* *वर्णनम्* – जयन्ती महालिङ्गम्
* *चित्रम्* – गौतमसेनः



सेण्ट् जान्स् चर्च्

तिरुचिरापल्लीनगरं देवालयानां निमित्तं यथा तथैव अष्टादशे नवदशे च शतके आंग्लेयैः निर्मितानां क्रिस्तालयानां, नगर-पालिकादि-सर्वकारीयभवनानां निमित्तम् अपि प्रसिद्धम् अस्ति । 'कैष्ट् चर्च्' १७६६ तमे वर्षे निर्मितम् - कासारस्य उत्तरभागे । सेण्ट् जार्स् चर्च् १८१६ तमे वर्षे सेनानिवेशस्य दक्षिणे भागे निर्मितम् । 'अवर् लेडी आफ् लाईस केथोलिक् चर्च्' इत्येतत् १८४० तमे वर्षे कासारतीरे निर्मितम् । यस्मिन् भवने लार्ड् क्लैवः निवसति स्म, तच्च भवनम् इदानीं सेण्ट् जोसेफ् महाविद्यालयस्य अङ्गम् अस्ति ।

श्रीरङ्गद्वीपे तिरुवनैक्कप्रदेशे जम्बुकेश्वर-महादेवस्य मन्दिरम् अस्ति । एतस्य मन्दिरस्य भव्यता अत्यपूर्वा । मन्दिर-शिखरं गगनचुम्बि । अनेकैः स्तम्भैः, मनोहरैः शिल्पैः च विभूषिताः प्रशालाः मन्दिरशोभां वर्धयन्ति । क्रिस्तीये प्रथम-शतके सङ्गमराजानां काले एतत् मन्दिरं निर्मितम् इति श्रूयते । एतत् मन्दिरं कोचेङ्गन्नन्नामकः चोलराजः निर्मापितवान् ।



जम्बुकेश्वरमन्दिरम्

अब्लिङ्गमन्दिरं भूमेः तावदधस्तनस्तरे अस्ति यत् मन्दिरं परितः जलं दृश्यते सदापि । अतः एव 'अब्-लिङ्गम्' इति नाम । मन्दिर-निर्माणतः पूर्वं तस्मिन् स्थले जम्बूवनम् आसीत् । तत्र



*प्रतिदिनं शिवलिङ्गस्य अभिषेकं कुर्वन् गजः*

च आवरणभित्तिः त्रयोदशे क्रिस्ताब्दे निर्मिता । चतुर्थे आवरणे अखिलाण्डेश्वरी-देव्याः मन्दिरम् अस्ति । तस्मिन् देव्याः भव्या मूर्तिः विराजते । देव्याः नेत्रकान्तिः दृष्टा चेत् भासते यत् एषा सजीवा एव इति । पूर्वम् एतस्याः नेत्रयोः उग्रता आसीत् इति श्रूयते । तत्कारणतः कोऽपि गर्भगृहे दीर्घकालं स्थातुं न शक्नोति स्म । शङ्कराचार्यः यदा एतत् मन्दिरम् आगतः तदा सः चक्राङ्कितं कर्णपुष्पं धारितवान् । ततः देव्याः रूपं सौम्यं जातम् । ख्यातः सङ्गीतविद्वान् मुत्तुस्वामिदीक्षितः कर्णाटक-सङ्गीतस्य त्रिषु रत्नेषु अन्यतमः । देव्याः मधुरं रूपं दृष्ट्वा नितराम् आनन्दितः सः कर्णमधुरैः शब्दैः देव्याः प्रार्थनापद्यानि रचितवान् ।

कस्यचित् वृक्षस्य अधः एकंशिवलिङ्गम् आसीत् । कश्चन गजः कश्चन ऊर्णनाभश्च शिवस्य भक्तौ आस्ताम् । पर्णादयः अवकारः लिङ्गस्य उपरि यथा न पतेयुः तथा जालं निर्माति स्म ऊर्णनाभः । गजस्तु कावेरीनदीतः जलम् आनीय अभिषेकं करोति स्म । अभिषेककारणतः ऊर्णनाभजालं विनष्टं भवति स्म । एतस्य कारणतः तयोः उभयोः मध्ये विवादः उत्पन्नः । एकदा नितरां कुपितः ऊर्णनाभः गजस्य शुण्डां प्रविश्य तम् अदशत् । ततः गजः प्राणैः वियुक्तः अभवत् । एषः ऊर्णनाभः एव अग्रिमे जन्मनि उरैयर् चोलराजवंशे कोचेङ्गन्नन्नाम्ना जन्म प्राप्तवान् इति ऐतिह्यं श्रूयते ।

एतस्य मन्दिरस्य चत्वारि परिक्रमणावरणानि सन्ति । आवरणभित्तयः विशालैः द्वारैः उन्नतैः स्तम्भैः च शोभिताः सन्ति । द्वितीया तृतीया

तिरुवनैक्कमन्दिरं पवित्रेषु शैवमन्दिरेषु अन्यतमम् अस्ति । चोलराजाः यथा तथैव होय्सलाः, पाण्ड्याः, नायकाः च एतस्मै मन्दिराय प्रभूतं दानं यच्छन्तः पोषणं कृतवन्तः । गतेषु शतकेषु बहुवारम् एतस्य मन्दिरस्य विस्तारणं पुनर्निर्माणं च जातम् । कर्णाटकयुद्धकाले आंग्लेयेभ्यः रक्षणार्थं फ्रान्सीयाः एतत् जम्बुकेश्वर-मन्दिरं शरणं गत्वा अत्रैव अस्त्रसङ्ग्रहं कृतवन्तः आसन् ।

श्रीरङ्गद्वीपतः द्विकिलोमीटर्दूरे कोलेरून्-नामिका (कोलेडन् इति अपरं नाम) शाखानदी कावेरीतः पृथग्भूय प्रवहति । एतस्मिन् स्थाने जलबन्धः निर्मितः अस्ति । करिकलान्नामकः

चोलराजः एतं जलबन्धं निर्मापितवान् इति श्रूयते । द्वितीये क्रिस्तशतके सः राजा आसीत् । कृष्यर्थं कावेरीजलस्य उपयोगं प्राप्तुं, महापूरस्य नियन्त्रणार्थं च कृतः प्रथमः प्रयासः एषः । स च जलम्बन्धः ३२९ मीटर्दीर्घः, १२-१८ मीटर्विस्तृतः, ४-५ मीटर्गभीरः च आसीत् । मूलरूपः जलबन्धः इदानीं नास्ति । यतः आंग्लेयाः आभियान्त्रिकाः सर् आर्थर् काटन्वर्यस्य मार्गदर्शनेन 'कावेरीडेल्टा' योजनायाः अङ्गतया १८०० तमे वर्षे एकं नूतनं जलबन्धं निर्मितवन्तः । १८०६ तमे वर्षे जलबन्धस्य औन्नत्यं वर्धितम् । १८३० तमे वर्षे जलनियन्त्रककवाटाः (स्क्रूज् गेट्) योजिताः । जलबन्धनिर्माणसमये तैः प्राचीनस्य जलबन्धस्य अस्तित्वं ज्ञातम् । सामान्यान् शिलाखण्डान् मृत्तिकाबन्धविशेषं च उपयुज्य निर्मितः सः जलबन्धः नद्याः प्रचण्डप्रवाहाघातं सहते स्म यत् तत् दृष्ट्वा ते आश्चर्यचकिताः । इतः ३२ कि.मी.दूरे १८३६-३८ वर्षयोः मध्यकाले अपरः जलबन्धः तैः निर्मितः । एषः ७० मीटर्दीर्घः, २ मीटर् - उन्नतः च आसीत् । एतस्मिन् २३ जल-नियन्त्रककवाटाः योजिताः आसन् । १८९०-१९०४ वर्षयोः मध्यकाले समग्रस्य एतस्य जलबन्धस्य पुनर्निर्माणं जातम् ।

मुख्यजलबन्धस्य किञ्चिदनन्तरं कि.मि.दूरे १८५१ तमे वर्षे कावेरी-वेन्नार-नियन्त्रकबन्धः निर्मितः, यश्च कावेर्याः मुख्यसहायकनदीनां जलापूर्तिं परिरक्षति । कावेर्याः सहायकनद्यः वेन्नार् वडावर, कन्नानार, बामनी, कुदरामुट्टी इत्येताः । एतासां नदीनां कारणतः कावेरीपरिसरे कृषिसमृद्धिः दृश्यते विशेषेण ।



मुख्यजलबन्धस्य उत्तर-भागे गङ्गैकोण्डचोलपुरम् अस्ति । एतत् नगरं राज-राजस्य राजेन्द्रचोलस्य प्राचीनराजधानी आसीत् । सः भव्यं बृहदीश्वरमन्दिरं निर्मापितवान् । तस्य गर्भगृहे ३.९मीटर्-उन्नतं शिवलिङ्गं प्रतिष्ठापितवान् सः । दक्षिणभारते स्थितेषु शिवलिङ्गेषु बृहत्तमम् एतत् । उत्तर-भारतीयं विजयम्

*मुख्यः जलबन्धः*

उपलक्ष्य स्मारकरूपेण सः एतत् मन्दिरं निर्मापितवान् । तदीया सेना बङ्गालसीमापर्यन्तं गत्वा प्रत्यागमनसमये पवित्रं गङ्गाजलम् आनीतवती आसीत् । अतः राजेन्द्रचोलः 'गङ्गैकोण्डाचोलः' (गङ्गां यः दक्षिणभारतम् आनीतवान् सः) इत्यपि निर्दिश्यते । मन्दिरस्य वास्तुकलासौन्दर्यं राजराजीय-तञ्जावूरीयमन्दिरस्य सोन्दर्यात् न अवरा । यद्यपि एतत् विशाले प्रदेशे प्रसृतम् अस्ति, तथापि एतस्य अट्टालिकानाम् औन्नत्यं न अत्यधिकम् । वास्तुकला तु अत्यपूर्वा अत्रत्या । महामण्डपस्य अभिमुखं



*गङ्गैकोण्डचोलपुरीयं मन्दिरम्*

स्थितः नन्दी तञ्जावूरीयनन्दी इव एव अस्ति । एतत् नगरं किमर्थं शिथिलावस्थाम् अवाप्नोत् इति तु न ज्ञायते ।

अग्रिमेषु शतकेषु कोऽपि राजा एतस्य मन्दिरस्य विषये अवधानं न दत्तवान् । कोलेरूनूजलबन्धस्य निर्माणार्थम् आङ्ग्लेयाः आभियान्त्रिकाः एतस्य भित्तेः शिलानाम् उपयोगं कृतवन्तः ।

पूर्वम् तञ्जावूरुपरिसरस्थः समग्रः प्रदेशः चोलमण्डलनाम्ना निर्दिश्यते स्म । एतस्मात् एव स्पष्टं भवति यत् अत्र चोलानां प्रभावः कियान् आसीत् इति । नवमे शतके एव राजा विजयालयचोलः तञ्जावूरुनगरं वशीकृत्य स्वराजधानीं कृतवान् आसीत् । सङ्गमकाले कावेरीपरिसरः समग्रः चोलराजवंशीयानाम् अधीनः आसीत् । विजयालयस्य, तत्पुत्रस्य आदित्यस्य च काले चोलराजाः पुनरपि शक्तिशालिनः सञ्जाताः । तौ दक्षिणभारते एकं प्रबलं साम्राज्यं प्रतिष्ठाप्य शासनं कृतवन्तौ । त्रयोदशशतकान्तं यावत् तेषां शासनम् अबाधितम् आसीत् ।



# तरङ्गिण्याः बुद्धिमत्ता

यदा श्यामः विंशतिवर्षीयः जातः तदा कदाचित् पितामही तं स्वसमीपम् आहूय - "वत्स ! इदानीं यद्यपि भवान् प्रौढः अस्ति तथापि नितरां मुग्धः, लोकव्यवहारे अनिपुणः च । विलक्षणे एतस्मिन् प्रपञ्चे जीवितुं यत् कौशलम् आवश्यकं तत् सर्वथा नास्ति भवतः । एतस्मिन् ग्रामे सर्वे भवतः स्वभावं जानन्ति । महता परिश्रमेण मया भवदर्थं दशसहस्रं रूप्यकाणि सञ्चितानि सन्ति । एतानि स्वीकृत्य भवान् नगरं गत्वा दश धेनूः क्रीत्वा क्षीरवाणिज्येन जीवनं करोतु । धेनवः मानवाः इव न वञ्चयन्ति भवन्तम् । यदि भवान् अत्रैव वसेत् तर्हि एतद्ग्रामीणाः भवदीयं धनं वञ्चनया वशीकुर्युः" इति उक्त्वा धनग्रन्थिं श्यामाय दत्तवती ।

दैवसंयोगात् तद्दिने रात्रौ एव सा परलोकं श्रितवती ।

श्यामः श्रद्धया पितामह्याः अन्त्यसंस्कारं कृतवान् । 'पितामह्या यथा उपदिष्टं तथैव करणीयं मया' इति निश्चित्य सः नगरगमन-सन्नाहम् आरब्धवान् । नगरं गत्वा आदौ प्रकोष्ठः कोऽपि अन्वेष्टव्यः खलु वासार्थम् ? 'यावत् प्रकोष्ठः न प्राप्यते तावत् धनं कुत्र वा रक्षणीयम् ?' इति प्रश्नः श्यामस्य पुरतः उपस्थितः । 'ग्रामप्रमुखाय न्यासरूपेण धनं समर्प्य नगरं गत्वा प्रकोष्ठम् अन्विष्य प्रत्यागत्य धनं नेष्यामि' इति सः निर्णीतवान् । अतः धनग्रन्थिं स्वीकृत्य ग्रामप्रमुखस्य गृहं गतवान् सः ।

तत्समये ग्रामप्रमुखस्य तत्पत्न्याः च कलहः प्रवर्तमानः आसीत् । केषाञ्चित् दिनानाम् अनन्तरम् आगमिष्यन्त्याः मातुः निमित्तम् उत्तमा एका शाटिका क्रेतव्या इति पत्न्याः इच्छा । किन्तु महाकृपणः ग्रामप्रमुखः एतत् निराकृतवान् । अतः तत्पत्नी नितरां क्रुद्धा । श्यामस्य आगमनं दृष्ट्वा सा कोपेन एव अन्तः गतवती ।

श्यामः धनग्रन्थिं ग्रामप्रमुखाय दत्त्वा - "दिनद्वयाभ्यन्तरे नगरतः प्रत्यागत्य धनं नेष्यामि । तावत् भवता एतत् सुरक्षिततया



स्थापनीयम्'' इति प्रार्थितवान् ।

तदा ग्रामप्रमुखः - ''अवश्यं रक्षिष्यामि । परोपकारः मम धर्मः'' इति हसन् अवदत् ।

तस्मिन् एव काले पाकशालायां स्थितायाः क्रोधतप्तायाः ग्रामप्रमुखपत्न्याः हस्तात् जलघटः पतितः भग्नः च । ततः महान् शब्दः अपि उत्पन्नः । तं श्रुत्वा श्यामः अपृच्छत् - ''कः शब्दः सः ?'' इति ।

''भूकम्पस्य आरम्भस्य सूचकः शब्दः सः । भवान् शीघ्रं निर्गच्छतु इतः'' इति अवदत् ग्रामप्रमुखः । श्यामस्य उपस्थितौ अपमानकरघटना काऽपि न प्रवर्तेत इति चिन्तयित्वा श्यामं शीघ्रं ततः प्रेषयितुं तथा उक्तवान् आसीत् सः ।

श्यामः नगरं गत्वा गृहप्राप्त्यर्थं बहुधा अन्वेषणं कृतवान् । किन्तु योग्यं भाटकगृहं न प्राप्तम् । निरन्तराटनात् सः नितरां श्रान्तः । महती पिपासा तम् अबाधत । अतः जलप्राप्त्यर्थं सः एकस्य गृहस्य द्वारं ताडितवान् ।

''कः भवान् ? किम् आवश्यकम् ?'' इति पृच्छन्ती काचित् षोडशी तरुणी द्वारम् उद्घाटितवती ।

''किं किञ्चित् जलं लभ्येत ? महती पिपासा मम'' इति अवदत् श्यामः ।

''तात ! कोऽपि आगतः अस्ति, पश्यतु'' इति उच्चैः उक्त्वा जलम् आनेतुम् अन्तः गतवती सा ।

पुत्र्याः आह्वानं श्रुत्वा बहिः आगतः बालमुकुन्दः अवदत् - ''वराकी मम पुत्री भवन्तं दृष्ट्वा भीता सती माम् उच्चैः आहूतवती इति मन्ये । नूतनात् आगन्तुकात् बिभेति सा । किं करवाम, विशाले एतस्मिन् गृहे अहं, मम पुत्री तरङ्गिणी च निवसावः । समीपे कस्यापि गृहम् अपि नास्ति । गृहस्य कञ्चन भागं भाटकाय दद्मः चेत् प्रतिवेशी लभ्यते इति चिन्तनं मम । किन्तु नगरसीमाप्रदेशे स्थितम् एतत् गृहं प्रति आगन्तुं कोऽपि न इच्छति'' इति ।

तावता तरङ्गिणी जलम् आनीय दत्तवती । श्यामः जलं पीत्वा नगरं प्रति स्वस्य आगमनस्य कारणं बालमुकुन्दं विस्तरेण निवेद्य अवदत् - ''यदि अत्र धेनुपालनं भवतः आक्षेपाय न स्यात् तर्हि योग्यं भाटकं दत्त्वा एतस्मिन् गृहे स्थातुम् अहं सिद्धः'' इति ।

एतत् श्रुतवतः बालमुकुन्दस्य मुखं

विकसितम् । सः सन्तोषेण अवदत् - ''धेनवः पवित्राः । मम गृहस्य पार्श्वे ताः सन्ति चेत् सौभाग्यं प्रवृद्धम् इव । कदा आगन्तुम् इच्छति भवान् ? भाटकं भवदिच्छानुगुणं भवतु'' इति ।

तदा तरङ्गिणी - ''तथा कथनं न युक्तं तात ! व्यवहारे अस्पष्टता न भवेत् । भाटकं कियत् इति इदानीम् एव निश्चयः वरम्'' इति पितरम् उक्त्वा श्यामम् उद्दिश्य - ''प्रतिमासं द्विशतं रूप्यकाणि भाटकरूपेण दातव्यानि'' इति अवदत् ।

भाटकगृहस्य अप्राप्त्या नितरां निराशः आसीत् श्यामः । पानजलयाचनार्थं यत्र गतं तत्रैव भाटकगृहम् अपि प्राप्येत इति तस्य निरीक्षा सर्वथा न आसीत् । अतः सः तरङ्गिण्या सूचितस्य भाटकस्य दानम् अङ्गीकृत्य - ''दिनद्वयाभ्यन्तरे वासार्थम् आगमिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

ग्रामं प्राप्य सः ग्रामप्रमुखस्य गृहं गत्वा आत्मना दत्तं धनं प्रतियाचितवान् ।

तत्समये ग्रामप्रमुखः मित्रैः सह जल्पनं कुर्वन् आसीत् । सः आश्चर्यं क्रोधं च प्रकटयन् - ''किं धनम् ? कदा दत्तम् ? किम् एतत् उच्यते भवता ?'' इति अपृच्छत् ।

''श्रीमन् ! द्वित्रेभ्यः दिनेभ्यः पूर्वं यदा भूकम्पः आरब्धः आसीत् तदा मया धनग्रन्थिः भवते दत्तः खलु'' इति उक्तवान् श्यामः ।

एतत् श्रुत्वा उच्चैः हसन् भूस्वामी - ''आ जन्मनः मया भूकम्पः एव न दृष्टः । मित्राणि ! किं भवद्भिः वा कोऽपि भूकम्पः दृष्टः ?'' इति उक्तवान् । पार्श्वस्थाः सर्वे हसितवन्तः ।



''पितामह्याः मरणस्य अनन्तरं भवतः मतिभ्रंशः जातः इति मन्ये । तदर्थम् एव दशसहस्रं रूप्यकाणि स्वीकर्तुम् आगतः भवान् ! रे, मूर्ख । निर्गच्छतु इतः । इतः परं कुत्रापि एतादृशी अविवेकिता न दर्शनीया'' इति तिरस्कारभावेन उक्तवान् ग्रामप्रमुखः ।

ग्रामप्रमुखस्य मुखात् एतादृशं वचनं श्रुत्वा श्यामः दिग्भ्रान्तः । तस्य मुखं कान्तिहीनं जातम् । सः किङ्कर्तव्यतामूढः जातः ।

निराशः सन् सः नगरं गत्वा बालमुकुन्दं प्रवृत्तं समग्रं विस्तरेण निवेदितवान् । तत्समये तरङ्गिणी अपि पार्श्वे एव आसीत् । सर्वं श्रुत्वा बालमुकुन्दः अवदत् - ''मित्र ! सर्वं ललाट-लिखितम् ! लब्धम् अपि कोऽपि वञ्चनया अपहृतवान् चेत् असहायाः वयं किं वा कर्तुं



शक्नुयाम ? अहो, सर्वं विधिविलसितम् !''
इति ।

तदा तरङ्गिणी उक्तवती – ''किमर्थम् एवम् उच्यते तात ! ग्रामप्रमुखः वञ्चनया दशसहस्त्रं रूप्यकाणि वशीकर्तुं न अर्हति । ततः धनं प्रतिप्राप्तुं प्रयासः करणीयः एव'' इति ।

''तत् कथं शक्येत वत्से ! श्यामेन न्यासरूपेण दशसहस्त्रं रूप्यकाणि दत्तानि इत्यत्र नास्ति प्रमाणं किमपि । ग्रामप्रमुखः धनिकः अधिकारवान् च । तेन सह कलहः अपि क्लेशाय'' इति निराशया उक्तवान् बालमुकुन्दः ।

''अलं निराशया । धनस्य प्रतिप्राप्त्युपायम् अहं सूचयामि । तदनुगुणं भवद्भ्यां व्यवहृतं चेत् धनं निश्चयेन प्रतिप्राप्यते'' इति उक्त्वा तरङ्गिणी स्वयोजनां विवृतवती ।

ततः तौ एकां पेटिकां स्वीकृत्य नगरात् निर्गतवन्तौ ।

बालमुकुन्दः पेटिकया सह गत्वा ग्रामप्रमुखस्य गृहे आसन्दे उपविष्टवान् । श्यामः गृहात् बहिः मार्गे स्थितवान् । ग्रामप्रमुखः बालमुकुन्दं दृष्ट्वा अपृच्छत् – ''महोदय ! कः भवान् ? किमर्थम् आगतं भवता ?'' इति ।

बालमुकुन्दः अवदत् – ''महाशय ! भवतः न्यायनिष्ठतां श्रुत्वा अहम् अत्र आगतः । एतस्यैव ग्रामस्य श्यामस्य भावी श्वशुरः अस्मि अहम्'' इति ।

श्यामनामश्रवणात् ग्रामप्रमुखः किञ्चिदिव भीतः सन् अपृच्छत् – ''मया किं वा साहाय्यं करणीयम् ?'' इति ।

तदा बालमुकुन्दः अवदत् – ''अल्पं साहाय्यम् अपेक्ष्यते एव । एतस्मिन् ग्रामे राममन्दिरे एव श्यामस्य विवाहः प्रचलेत् इति तदीयपितामह्याः अपेक्षा आसीत् । विवाहव्ययार्थं मया षष्टिसहस्त्रं रूप्यकाणि आनीतानि । तानि न्यासरूपेण रक्षणीयानि भवता । आवश्यकतानुसारं वयं तदा तदा ततः किञ्चित् किञ्चित् स्वीकरिष्यामः । भवतः सद्व्यवहारः मया बहुधा श्रुतः । भवदधीनीकृतं धनं सुरक्षिततया स्थास्यति इति विचिन्त्य अत्र आगतं मया'' इति ।

''किम् अधिककथनेन ? भवतः सेवां कर्तुं भगवता एव कल्पितः अवकाशः एषः'' इति विनयेन अवदत् ग्रामप्रमुखः ।

अत्रान्तरे श्यामः अन्तः आगत्य उक्तवान्

- ''ह्यः आगतः अहं, दिनद्वयात् पूर्वं न्यासरूपेण दत्तं धनं यदा प्रतियाचितवान् तदा पृष्टं भवता - कदा दत्तम् इति । यद्दिने मया धनं दत्तं तस्मिन् दिने भवतः पत्नी कुपिता आसीत् । पाकशालातः आगतं शब्दं श्रुत्वा अहं पृष्टवान् - कः शब्दः एषः इति । तदा भवता उक्तम् आसीत् - भूकम्पः आरब्धः इति । किं स्मृतं भवता ?'' इति ।

ग्रामप्रमुखः प्रीत्या श्यामस्य स्कन्धे हस्तं स्थापयित्वा - ''भवता न्यासरूपेण दशसहस्रं रूप्यकाणि दत्तानि इति ह्यः अपि अहं स्मरामि स्म । तथापि विस्मृतम् इव अभिनयः कृतः । स च भवतः हिताय एव । मत्पार्श्वे ह्यः ये आसन् ते ऋणप्राप्त्यर्थम् आगताः आसन् । मया तेभ्यः ऋणदानं निराकृतम् । ते तु त्वरया धनम् अपेक्षन्ते स्म । यदि तेषां पुरतः धनं दद्यां तर्हि उपायेन ते तत् वशीकुर्युः एव । भवान् लोकव्यवहारानभिज्ञः इत्यतः मया तथा कृतम् । एषोऽहं भवतः धनं प्रत्यर्पयामि'' इति उक्त्वा अन्तर्भागतः धनग्रन्थिम् आनीय श्यामाय दत्तवान् । श्यामः धनं स्वीकृत्य ततः निर्गतवान् । तदा बालमुकुन्दः स्यूतं गृहीत्वा उत्तिष्ठन् - ''भवतः कथनात् मया ज्ञातं यत् श्यामः व्यवहारे अचतुरः मन्दमतिश्च इति । एतादृशाय मया पुत्री सर्वथा न दीयते । उपकृतवते भवते अनेके धन्यवादाः'' इति उक्त्वा ततः निर्गतवान् ।

'द्वारं प्रति आगतं धनं हस्तगतं न जातम्' इति स्वगतं वदन् खेदेन आसन्दे उपविष्टवान् ग्रामप्रमुखः ।

अनन्तरदिने स्ववस्तुभिः साकं बाल-मुकुन्दस्य गृहं प्रति गतः श्यामः - ''भवतोः साहाय्येन एव मया नष्टप्रायं धनं प्रतिप्राप्तम् । वासार्थं गृहम् अपि प्राप्तम् । न जाने, एतस्मात् ऋणात् मुक्तिः कथम् इति'' इति कृतज्ञता-पूर्वकम् उक्तवान् ।

''मम पुत्र्याः परिणयेन । मम पुत्र्याः बुद्धिमत्ता भवतः श्रमशीलता च सम्मिलतः चेत् सुवर्णे सौगन्ध्यसंयोगः इव'' इति अवदत् बालमुकुन्दः ।

ततः तरङ्गिणी-श्यामयोः विवाहः शुभे मुहूर्ते सम्पन्नः । तौ सुखेन जीवितवन्तौ ।



## सर्जनात्मिका स्पर्धा - मे - २०००

# सत्यम् एव जयते

रामपुरराज्यं विश्वदेवः नाम राजा पालयति स्म । सः सर्वदा विलासे मग्नः भवति स्म । राज्यशासने अपि आसक्तिं न वहति स्म ।

तस्य मन्त्री विजयसेनः । राज्ञः प्रीतिः कथं सम्पादनीया इति सः जानाति स्म । सर्वदा राज्ञः मुखस्तुतिं करोति स्म सः । 'मम शासनं कथम् अस्ति ?' इति राजा यदा पृच्छति स्म तदा मन्त्री वदति स्म - ''भवतः राज्यशासनम् अपूर्वम् ! अस्मद्राज्यं नन्दनवनतुल्यं करिष्यति भवान्'' इति ।

सेनाविषये राज्ञा पृष्टः मन्त्री वदति स्म - ''अस्माकं सेना सर्वसमर्था अस्ति । सुसज्जा च अस्ति । अस्मद्राज्यं कोऽपि कटाक्षेण अपि द्रष्टुं न शक्नोति'' इति ।

अतः राजा चिन्तयति स्म - 'मम राज्यं सुसमृद्धम् अस्ति । प्रजाः च सर्वाः सन्तुष्टाः सन्ति । अस्मद्राज्यं जेतुं कोऽपि न शक्नोति' इति ।

राजा सभायाम् अपि तदा तदा पृच्छति स्म - ''मम शासनं कथम् अस्ति ?'' इति । सभासदः सर्वे - 'बहु उत्तमम् अस्ति' इति वदन्ति स्म ।

एकदा कश्चन प्रजाप्रतिनिधिः उक्तवान् - ''प्रभो, औद्धत्यार्थं क्षन्तव्यः अयं जनः । देशे शासनव्यवस्था इदानीं नितरां दुर्बला अस्ति । अधिकारिणः भ्रष्टाः जाताः । प्रजाश्च असन्तुष्टाः सन्ति । सैनिकाः स्वेच्छाचाराः । आलस्येन लुण्ठनेन विलासमग्नतया च ते दिनानि यापयन्ति । एषा एव स्थितिः अनुवर्तिष्यते चेत् अस्माकं देशः अधोगतिं यास्यति'' इति ।

एतत् श्रुत्वा राजा क्रुद्धः । सः भटान् आज्ञापितवान् - 'एतं कारागारे स्थापयन्तु' इति । भटाः तथैव कृतवन्तः ।

मासाः गताः । देशे तत्र तत्र राजविरोधः आरब्धः । भ्रष्टाः अधिकारिणः परिवर्तनीयाः इति वदन्तः जनाः कोलाहलं कृतवन्तः । राजा सेनां प्रेषयित्वा तेषां निग्रहार्थं प्रयत्नं कृतवान् । एतेन राजविरोधः प्रवृद्ध, देशे इतरत्र अपि प्रसृतः च । राजा चिन्ताक्रान्तः जातः । शासनव्यवहारः कथं समीकरणीयः इति चिन्ता तस्य आरब्धा । अतः सहजतया शासनव्यवहारे तस्य अवधानं जातम् ।

दिनेषु गतेषु गूढचराणां द्वारा सः देशस्य अधोगतिं क्रमेण ज्ञातवान् । महतीम् अव्यवस्थां ज्ञात्वा सः नितरां विषण्णः । मन्त्री, केचन अधिकारिणः च अक्रमेण प्रभूतं धनं सम्पादितवन्तः सन्ति इत्यपि तेन ज्ञातम् । राजा व्याकुलः जातः ।

'स्वार्थपरायणे मन्त्रिणि विश्वस्य मया अनुचितं कृतम् । मम देशः कीटैः भक्षितः वृक्षः इव दुर्बलः अस्ति । यदि एतं समीकर्तुम् अहम् अवधानं न दास्यामि तर्हि अचिरात् एव मम देशः शत्रुवशं गच्छेत्' इति चिन्तयित्वा राजा अक्रमसम्पत्तिं सम्पादितवतां विचारणां कारितवान् । तत्र मन्त्रिप्रभृतीनाम् अपराधः सिद्धः अभवत् । राजा तान् सर्वान् कारागारं प्रति प्रेषितवान् । सत्यवादिनं च प्रजाप्रतिनिधिं कारागारात् विमोच्य मन्त्रिपदे नियोजितवान् ।

**- अरक्षितपृष्टिः**

## ५२. शिखण्डिवृत्तान्तः

# महाभारतम्

दुर्योधनेन पृष्टः भीष्मपितामहः उभयपक्षयोः सैन्यस्य स्वरूपं विस्तरेण विवृतवान् । शिखण्डिप्रस्तावः यदा आगतः तदा सः अवदत् यत् अहं तं न मारयिष्यामि, सः स्वयं युद्धं कर्तुम् आगमिष्यति चेदपि अहं तं मारयितुं शस्त्रं न उन्नेष्यामि इति ।

एतत् श्रुत्वा दुर्योधनः अपृच्छत् - ''शत्रून् सर्वान् नाशयिष्यामि इति भवता एव प्रतिज्ञा कृता । तथापि शिखण्डिनं न मारयिष्यामि इति किमर्थम् उच्यते ?'' इति ।

तदा भीष्मः अवदत् - ''सा च काचित् दीर्घा कथा । प्रसङ्गवशात् तद्विषये चर्चा आगता इत्यतः तां विस्तरेण कथयिष्यामि ।

मम पिता शन्तनुः दीर्घकालं यावत् राज्यं परिपालितवान् । तस्य दिवङ्गतेः अनन्तरं मया चित्राङ्गदः सिंहासने उपवेशितः । सः यदा अकालमरणं प्राप्तवान् तदा मम मार्गदर्शनं प्राप्नुवन् विचित्रवीर्यः शासव्यवस्थाभारं स्वीकृतवान् । तस्य विवाहविषये मम चिन्ता आरब्धा । यतः पराक्रमेण कस्याश्चित् हृदयं जेतुं, स्वयंवरे विजयं प्राप्तुं वा तस्य सामर्थ्यं न आसीत् ।

अत्रान्तरे काशीराजः स्वपुत्रीणां स्वयंवरम् आयोजितवान् । तासां नाम आसीत् - अम्बा, अम्बिका, अम्बालिका चेति । स्वयंवरार्थं सर्वे निमन्त्रिताः आसन् । विचित्रवीर्यस्य सामर्थ्यम् अपर्याप्तम् इत्यतः अहम् एव एकाकी काशीं गतः । मया उपस्थितानां राज्ञां सामर्थ्यं जागरूकतया परिशीलितम् । ततः ताः तिस्रः राजकुमारीः अपि रथे आरोप्य सर्वान् राज्ञः उद्दिश्य - ''अहं महाराजस्य शन्तनोः पुत्रः भीष्मः अस्मि । अहम् एताः





तिस्रः राजकुमारीः नयन् अस्मि । यदि कस्यचित् सामर्थ्यं स्यात् तर्हि सः मां निरुध्य एताः वशीकर्तुम् अर्हति'' इति अघोषयम् ।

एतत् श्रुत्वा क्रुद्धाः सर्वे राजानः सम्भूय युगपत् आक्रमणं कृतवन्तः । चतसृषु दिक्षु माम् आवृत्य स्थितवन्तः ते । किन्तु मया यदा सर्वासु दिक्षु बाणवर्षणं कृतं तदा भीताः ते पलायितवन्तः ।

अहं तिस्रः कन्यकाः सत्यवत्यै समर्प्य अवदम् - ''अम्ब ! काशीराजस्य पुत्रीः स्वयंवरात् अपहृत्य आनीतवान् अस्मि । एताः विचित्रवीर्यस्य पत्न्यः भविष्यन्ति । विवाह-सन्नाहं करोतु भवती'' इति ।

एतत् श्रुत्वा सत्यवती नितरां सन्तुष्टा ।

यदा विवाहसन्नाहः आरब्धः तदा काशी-राजस्य ज्येष्ठपुत्री अम्बा माम् उक्तवती - ''अहं साल्वराजे अनुरागवती अस्मि । सोऽपि माम् इच्छति । विवाहार्थम् आवाम् उभौ अपि सिद्धौ आस्व । तदभ्यन्तरे भवता अहम् आनीता । आवयोः अनुरागं पिता न जानाति । अहं साल्वराजसमीपं प्रेषणीया इति सविनयं प्रार्थये'' इति ।

अहं मात्रा, सत्यवत्या, पुरोहितेन च सह समालोच्य अम्बां सगौरवं साल्वसमीपं प्रेषितवान् ।

किन्तु साल्वराजः तां परिणेतुम् अनिच्छन् - ''भीष्मेण बलात् नीतां भवतीम् अहं परिणेतुं न इच्छामि । भवत्याः विषये भीष्मस्य एव अधिकारः । यदि सोऽपि भवतीं न परिणयेत् तर्हि भवती स्वतन्त्रतया यथेच्छं कर्तुम् अर्हति । अहं तु सर्वथा न परिणेष्यामि'' इति अवदत् ।

अम्बा पुनः पुनः परिणयं सम्प्रार्थितवती । किन्तु साल्वेन अन्ते अपि निराकृतिः एव प्रदर्शिता । अहं ताम् अपहृतवान् इत्यतः अम्बा मयि कोपं प्राप्तवती । 'प्रतीकारं साधयिष्यामि एव' इति प्रतिज्ञां कृतवती च ।

साल्वेन निराकृता अम्बा शैखावत्यऋषेः आश्रमं गतवती, स्वव्यथां निवेदितवती च । तदा मुनिः अवदत् - ''अत्र तपस्विनः एव वसन्ति । अतः वयं भवत्याः साहाय्यं किमपि कर्तुं न शक्नुमः'' इति ।

''अहं जीवने नितरां निराशा अस्मि । अतः अहम् अपि तपः आचरिष्यामि । मां तपस्याविधिं बोधयतु'' इति निवेदितवती अम्बा ।

''तपस्या नितरां कठिना । अतः पितुः

समीपं गमनम् एव वरम्'' इति बोधितवन्तः सर्वे मुनयः । किन्तु अम्बा एतत् न अङ्गीकृतवती ।

तत्काले होत्रवान् नाम कश्चन राजर्षिः तम् आश्रमम् आगतः । सः अम्बायाः बन्धुः अपि । सः अम्बायाः कथां श्रुत्वा अवदत् - ''वत्से ! तपश्चरणं कोमलकायैः कर्तुं न शक्यम् । अन्यच्च कौटुम्बिकेच्छाः तपस्यामार्गे विघ्नकारिकाः भवन्ति । यदि साल्वराजः भवत्याः परिणयं न अङ्गीकरोति तर्हि भवती भीष्मसमीपम् एव प्रतिगच्छतु । भीष्मम् एव परिणयं प्रार्थयतु । तदीयः गुरुः परशुरामः अत्र साहाय्यं कर्तुम् अर्हति । यदि भीष्मः परिणयं निराकुर्यात् तर्हि परशुरामः आदेश-द्वारा वा विवाहं कारयेत् । अपेक्षायां सत्यां भवत्याः पक्षस्य समर्थकत्वेन युद्धम् अपि कुर्यात् सः'' इति ।



तदनन्तरदिने एव सौभाग्यवशात् परशुरामः महेन्द्रपर्वततः तम् आश्रमम् आगतः । होत्रवान् अम्बायाः कथां निवेद्य - ''एतस्याः समस्यायाः निवारणार्थं भवता कोऽपि उपायः करणीयः'' इति प्रार्थितवान् ।

परशुरामः अम्बाम् अवदत् - ''वत्से ! भवती यम् इच्छति सः एव यथा भवतीं परिणयेत् तथा व्यवस्थाम् अहं करिष्यामि । अतः वदतु - भवती साल्वसमीपं गन्तुम् इच्छति उत भीष्मसमीपम् ?'' इति ।

''मम कष्टपरम्परायाः कारणं भीष्मः एव । यदि सः मां बलात् अपहृतवान् न स्यात् तर्हि साल्वराजः मम परिणयं न निराकृतवान् स्यात् । वस्तुतः साल्वः इदानीम् अपि मयि अनुरागवान् अस्ति एव । तथापि अपवादभयात् मां न परिणयति सः । यतः भीष्मः मां बलात् नीतवान् अतः सः एव मां परिणयेत् । अन्यथा प्रतीकारः करिष्यते एव मया । तस्य वधम् एव लक्ष्यीकृत्य तपस्यां करिष्यामि अहम्'' इति उक्तवती अम्बा ।

''भीष्मः भवतीं यथा परिणयेत् तथा आदेशम् अहं करिष्यामि । तेन निराकृतिः दर्शिता चेत् युद्धं करिष्यामि । किन्तु तं सहंतुं तु मम सामर्थ्यं नास्ति '' इति उक्त्वा परशुरामः कैश्चित् ऋषिभिः सह ततः प्रस्थाय सरस्वती-नदीतीरे स्थिते कुरुक्षेत्रे तिष्ठन् मह्यम् आगमनसन्देशं प्रेषितवान् ।

अहं गवा ब्राह्मणैः च सह गत्वा तं नमस्कृत्य यथोचितं सत्कृतवान् । सः माम्



साल्वराजसमीपं गन्तुं, तम् एव परिणेतुं च इच्छां प्रकटितवती । अतः सगौरवं सा प्रेषिता मया । साल्वराजः एतस्याः परिणये निराकृतिं दर्शितवान् । एतस्मिन् प्रकरणे मम को वा दोषः ?'' इति ।

एतत् श्रुतवतः परशुरामस्य क्रोधः प्रवृद्धः । सः क्रोधेन आज्ञापयत् - ''अम्बा भवता परिणेतव्या एव । अन्यथा अहं भवतः संहारं करिष्यामि'' इति ।

अहं तेन सह युद्धं कर्तुं न ऐच्छम् । यतः सः मम गुरुः । अतः अहम् अवदम् - ''भवान् अस्त्रशस्त्रज्ञानदाता मम गुरुः । भवता सह अहं कथं वा युद्धं कुर्याम् ? सर्वथा असम्भवम् एतत्'' इति ।

''एवं तर्हि अम्बां परिणयतु'' इति आदिशत् सः ।

अवदत् - ''भीष्म ! आजीवब्रह्मचर्यं प्रतिज्ञातं भवता । एवं स्थिते किमर्थं वा अम्बा नीता बलत्कारेण ? नीता सा भवता तु न परिणीता । ततः तस्याः जीवनं शोकावहं जातम् । इदानीं को वा तां परिणयेत् ? भवत्कारणतः साल्वः तस्याः परिणयं निराकृतवान् । अतः भवता एव सा परिणेतव्या'' इति ।

तदा मया उक्तम् - ''मया विचित्रवीर्यस्य निमित्तं काशीराजस्य तिस्रः पुत्र्यः बलात् आनीताः । मन्निमित्तं ताः न आनीताः इति तु सर्वैः ज्ञायते एव । 'ब्रह्मचारित्वेन आजीवनं तिष्ठामि' इत्येषा मम प्रतिज्ञा सर्वथा अविचला । देवन्द्रम् अपि अहं सम्मुखीकुर्यां, किन्तु प्रतिज्ञाभङ्गं तु न अङ्गीकुर्याम् । अम्बा

''प्रतिज्ञाभङ्गात् अपि युद्धं मरणम् एव वा प्रियतरं मम । केनापि कारणेन प्रतिज्ञाभङ्गं तु अहं न करोमि । यदि युद्धम् एव शरणं तर्हि तदर्थम् अपि सन्नद्धः एव अस्मि अहम्'' इति अहं विनयेन अवदम् ।

परशुरामः स्वनिश्चयपरिवर्तनं न ऐच्छत् । अहम् अपि प्रतिज्ञाभङ्गं न ऐच्छम् । अतः युद्धम् अपरिहार्यं जातम् ।

अहं हस्तिनापुरम् आगत्य मातरं सत्यवतीं सर्वं निवेद्य तस्याः आशीर्वादं प्राप्य कुरुक्षेत्रं गतवान् । परशुरामः युद्धार्थं माम् एव प्रतीक्षमाणः आसीत् । आवयोः युद्धं द्रष्टुम् अनेके ऋषिमुनयः गणरूपेण तत्र उपस्थिताः आसन् ।

आवयोः युद्धम् आरब्धम् । चतुर्विंशति-

घण्टाः युद्धं प्रवृत्तम् । अन्ते पराजितः परशुरामवर्यः अम्बाम् अवदत् - ''दृष्टं खलु भवत्या एव ! अहं भीष्मं संहर्तुं न शक्नोमि । अतः भवती एव तं शरणं गच्छतु'' इति ।

किन्तु अम्बा शरणागतिं निराकृतवती । ततः यमुनातटे उपविश्य द्वादश वर्षाणि तपः कृतवती सा । तस्याः सहोदरः तां गृहं नेतुम् इच्छति स्म । अतः तेन विविधाः विघ्नाः उत्पादिताः । तथापि अविचला सा एकाग्रमनसा तपः कृतवती । तस्याः तपसा सन्तुष्टः शिवः प्रत्यक्षीभूय - 'अपेक्षितं वरं याचताम्' इति अवदत् । ''मया युद्धे भीष्मस्य वधः यथा कर्तुं शक्येत तथा वरेण अनुगृह्णातु'' इति प्रार्थितवती सा ।



तदा शिवः अवदत् - ''अग्रिमजन्मनि स्त्रीरूपेण भवत्याः जन्म भविष्यति । किन्तु कालान्तरे भवती पुरुषरूपं प्राप्य युद्धे भीष्मं संहर्तुं शक्ता भविष्यति'' इति ।

प्रतीकारसाधने महती त्वरा अम्बायाः । अतः सा 'शीघ्रं मरणं प्राप्तं चेत् पुनर्जन्म अपि शीघ्रम् एव प्राप्यते' इति निर्णीय चिताप्रवेशेन इहलोकव्यवहारं समापितवती ।

अग्रिमजन्मनि सा द्रुपदस्य अपत्यत्वेन जन्म प्राप्तवती । द्रुपदः मत्तः पराजयं प्राप्य प्रतीकारार्थम् अवकाशं प्रतीक्षमाणः आसीत् । तेनापि मत्संहारकपुत्रप्राप्तीच्छया तपः कृतम् । तपसः अन्ते शिवः तम् अवदत् -''भीष्मसहांरकः भवतः गृहे आदौ स्त्रीरूपेण जन्म प्राप्स्यति । किन्तु अनन्तरकाले पुरुषत्वं प्राप्य भीष्मं संहरिष्यति'' इति ।

गच्छता कालेन द्रुपदपत्न्यां स्त्रीशिशुः उत्पन्नः । किन्तु द्रुपदः उद्घोषितवान् यत् पुत्रोत्सवः जातः इति । रहस्यगोपनार्थं स च स्त्रीशिशुः बालत्वेन एव पोषितः । यतः द्रुपदतत्पत्न्योः दृढः विश्वासः आसीत् यत् शिवस्य वचनं मिथ्या न भविष्यति इति । अतः तौ तस्य स्त्रीशिशोः नाम शिखण्डी इति निश्चितवन्तौ ।

शिखण्डी ललितकलासु इव युद्धकलासु अपि निपुणः जातः । पुरुषवेषेण गत्वा सः द्रोणाचार्यात् धनुर्विद्याम् अधिगृहीतवान् ।

यदा सः विवाहयोग्यवयस्कः जातः तदा अपि तदीयं स्त्रीत्वं तु न अपगतम् । अतः द्रुपदस्य चिन्ता जाता - एतस्मै अपत्याय वधूः अन्वेष्टव्या, उत वरः अन्वेषणीयः इति । अन्ते पत्न्याः सूचनानुगुणं सः निर्णीतवान्



यत् वध्वन्वेषणम् एव युक्ततरम् इति ।

दशार्णदेशस्य राज्ञः हिरण्यरोम्णः पुत्री शिखण्डिनी । दशार्णराजः शिखण्डिने स्वपुत्र्याः दानं ससन्तोषम् अङ्गीकृतवान् । अल्पेन एव कालेन शिखण्डिनी-शिखण्डिनोः विवाहः यथाविधि सम्पन्नः ।

विवाहानन्तरं शिखण्डिनी ज्ञातवती यत् पतित्वेन स्थितः अपि स्त्रीजनः एव इति । अतः सा एतां वार्तां पितरम् उक्तवती । एतत् श्रुत्वा नितरां क्रुद्धः हिरण्यरोमा द्रुपदाय वार्तां प्रेषितवान् - ''भवतः अपत्यं न पुमान्, अपि तु स्त्री । स्त्र्यपत्यम् एव पुमपत्यं कथयन् भवान् मां वञ्चितवान् । अतः अहम् अचिरात् एव ससैन्यम् आगत्य भवन्तं दण्डयिष्यामि'' इति ।

राजा द्रुपदः तत्पत्नी च एतं सन्देशं प्राप्य नितरां भीतौ । दशार्णसेनां सम्मुखीकर्तुं सामर्थ्यं न आसीत् द्रुपदस्य । अन्यच्च 'शिखण्डिरहस्यं यदि सर्वैः ज्ञायेत तर्हि आवाम् उपहासपात्रतां गच्छेव' इति आतङ्कः आसीत् तयोः । अतः तौ चिन्ताक्रान्तौ जातौ । माता-पित्रोः एतत् दुःखं द्रष्टुम् असमर्थः अभवत् शिखण्डी । सः प्राणत्यागार्थं वनम् अगच्छत् ।

तत् वनं स्थूणापर्णनामकस्य यक्षस्य निवासस्थानम् आसीत् । शिखण्डी अन्न-पानादिकं परित्यज्य प्रायोपवेशार्थम् एकत्र उपविष्टः । तस्य एतं प्रयत्नं दृष्ट्वा स्थूणापर्णः अपृच्छत् - ''किमर्थम् एतादृशे साहसकार्ये प्रवृत्तिः ?'' इति ।

''मम कष्टं वर्णनातीतम् । केनापि निवारयितुम् अशक्यं तत्'' इति अवदत् शिखण्डी । तदा यक्षः स्वपरिचयम् उक्त्वा - ''अहं कुबेरस्य मित्रम् । वरदानेन भवत्समस्यायाः परिहारं कर्तुं शक्तिः अस्ति मम'' इति असूचयत् ।

शिखण्डी स्वसमस्यां विस्तरेण निवेद्य उपस्थितां विपदम् अपि अकथयत् ।

एतत् श्रुतवतः यक्षस्य हृदये करुणा उत्पन्ना । किन्तु स्त्रियं शाश्वतरूपेण पुरुषं कर्तुं सामर्थ्यं न आसीत् तस्य । अतः सः अवदत् - ''भवत्समस्यायाः निवारणार्थं कश्चन उपायः स्फुरितः मम मनसि । अल्पकालार्थं मम पुरुषत्वं स्वीकृत्य भवता स्त्रीत्वं मह्यं दातव्यम् । तेन युद्धापायः अपगतः भविष्यति । केषाञ्चित् दिनानाम् अनन्तरं मम पुरुषत्वं मह्यं प्रत्यर्पणीयम्'' इति ।

शिखण्डी एतं प्रस्तावम् अङ्गीकृत्य पुरुषत्वं प्राप्य आनन्देन प्रासादम् आगत्य पितरं सर्वं निवेदितवान् ।

एतत् श्रुतवतः द्रुपदस्य आनन्दः असीमः । सः दशार्णराजाय सन्देशं प्रेषितवान् – "मम अपत्यं पूर्णरूपेण पुंल्लक्षणोपेतम् इत्यत्र नास्ति सन्देहलेशः अपि । यदि सन्देहः तर्हि स्वयं परीक्षितुम् अर्हन्ति भवन्तः" इति ।

दशार्णराजः विश्वासार्हजनद्वारा परीक्षां कारितवान् । शिखण्डिनः पुरुषत्वं यदा प्रत्यक्षसिद्धम् अभवत् तदा सः पुत्रीं पतिग्रहं प्रेषितवान् । युद्धघोषणरूपं यत् धाष्टर्यं प्रदर्शितं तदर्थं क्षमां प्रार्थितवान् च ।

अत्रान्तरे कदाचित् कुबेरः विमानम् आरुह्य स्थूणापर्णस्य वनम् आगतवान् । स्त्रीरूपी स्थूणापर्णः लज्जया एव तस्य पुरतः उपस्थितः । कुबेरः स्त्रीत्वप्राप्तेः कारणं पृष्टवान् । स्थूणापर्णः प्रवृत्तं निवेदितवान् । सर्वं श्रुत्वा कुपितः कुबेरः – "भवतः स्त्रीरूपम् एव स्थिरं भवतु" इति शापं दत्तवान् । स्थूणापर्णः शापविमोचनं बहुधा यदा प्रार्थितवान् तदा कुबेरः – 'शिखण्डिनः मरणस्य अनन्तरं भवता पुरुषत्वं प्राप्यते' इति उक्त्वा ततः निर्गतवान् ।

शिखण्डी तु आनन्देन कौटुम्बिकजीवनं यापितवान् । पुत्रस्य पुरुषत्वप्राप्तिं दृष्ट्वा द्रुपदः तत्पत्नी च नितरां सन्तुष्टौ । केषाञ्चित् मासानाम् अनन्तरं शिखण्डी यक्षाय दत्तं वचनं स्मृतवान् । ततः तस्य मनः मुकुलितं जातम् ।

एकदा सः पुरुषत्वस्य प्रत्यर्पणार्थं तत् वनं गतवान्, यत्र पूर्वं स्थूणापर्णः आसीत् । किन्तु कुबेरस्य शापस्य कारणतः स्थूणापर्णः स्वकीयं पुरुषत्वं प्रतिप्राप्तुं न शक्तवान् । एवं शिखण्डिनः पुरुषत्वं स्थिरं जातम् ।

एवं शिखण्डिकथां श्रावयित्वा भीष्मः दुर्योधनम् अवदत् – "अम्बा एव इदानीं शिखण्डिरूपेण अस्ति । स्त्री, स्त्रीनामधारी, स्त्रीचरित्रवान् जनो वा यदि पुरतः भवति तर्हि अहं तस्मिन् मम शस्त्रप्रयोगं न करोमि इति मम प्रतिज्ञा अस्ति । तत्कारणतः एव अहं शिखण्डिनि शस्त्रं प्रयोक्तुं, तं मारयितुं वा न शक्नोमि" इति ।





# वास्तविकः जयः

कदाचित् निरञ्जनपुरीयाः चत्वारः युवकाः वृक्षस्य अधः उपविश्य जल्पनं कुर्वन्तः आसन् । जल्पनावसरे भूषणः नाम युवकः अवदत् - ''साधयितुम् असाध्यं कार्यं किमपि नास्ति लोके । योग्यः प्रयत्नः कृतः चेत् कठिनातिकठिनम् अपि कार्यं साधयितुं शक्यम्'' इति ।

''यत् असाध्यं भवति तत् महता प्रयत्नेन अपि कोऽपि साधयितुं सर्वथा न अर्हति'' इति अवदत् दयानिधिः ।

एतद्विषये तेषां चर्चा अनुवृत्ता । वाद-प्रतिवादाः उग्राः जाताः । अन्ते दयानिधिः भूषणम् अवदत् - ''असाध्यम् अपि कार्यं योग्येन प्रयत्नेन साधयितुं शक्यम् इति किल भवतः वादः ? भवतः पिता धूमपानं विना एकां घण्टाम् अपि यापयितुं न अर्हति । तदीयः धूमपानत्यागः सर्वथा असम्भवः । यदि भवान् तस्य धूमपानप्रवृत्तिं त्याजयेत् तर्हि अहं भवते शतं रूप्यकाणि दास्यामि'' इति ।

भूषणः क्षणकालं विचिन्त्य अवदत् - ''भवता दातुम् इष्टानि शतं रूप्यकाणि मह्यं न आवश्यकानि । किन्तु भवता सूचितं कार्यं तु अवश्यं साधयिष्यामि । मया एतदर्थं महान् श्रमः करणीयः भवेत् । तथापि न कापि चिन्ता मम'' इति ।

अनन्तरदिने भूषणः पितरं धूमपानस्य दुष्परिणामान् विवृण्वन् अवदत् - ''धूम-पानकारणतः आयुः क्षीयते । विविधाः व्याधयश्च शरीरम् आक्रामन्ति । असह्यपीडा दीर्घकालं यावत् निरन्तरबाधां जनयिष्यति । अन्ते अकालमरणम् अपि सम्भवेत् । अतः धूमपानव्यसनस्य त्यागः एव वरम्'' इति ।

भूषणस्य पिता माधवः उत्तमः एव । किन्तु कथमपि धूमपानव्यसनस्य दासः जातः सः । वार्तालापादिसमये सः धूमपानं कुर्वन् एव सम्भाषणं करोति स्म ।

सः धूमपानस्य दुष्परिणामान् न जानाति इति न । तथापि धूमपानं त्यक्तुं तु न शक्नोति । पुत्रस्य वचनानि श्रुत्वा धूमपानं

सुभद्रा

कुर्वन् एव सः अवदत् - ''जीवनं मरणं वा अस्मदधीनं नास्ति । येन क्रमेण मरणं भवेत् इति भगवता अस्मल्ललाटे लिखितं तेनैव क्रमेण मरणं भविष्यति, न अन्यथा । यदि अकालमरणं ललाटे लिखितं स्यात् तर्हि धूमपानत्यागेन अपि तत् भवेत् एव । धूमपानस्य कारणतः स्वास्थ्यं दुष्यति इति तु मया अपि अङ्गीक्रियते । किन्तु धूमपानतः यः आनन्दः प्राप्यते सः श्रेष्ठात् आरोग्यात् अपि श्रेष्ठतरः । नीरसेन निरानन्देन जीवनेन किं वा प्रयोजनम् ? एकैकस्य जीवनम् एकैकविधं भवति । तस्य परिवर्तने प्रयासः न करणीयः । अतः एतद्विषये मां मा पीडयतु भवान्'' इति ।



एतावत् उक्त्वा अपरां धूमवर्तिकां ज्वालयित्वा सः पुनः अवदत् - ''धूमपानं मम श्वासः इव । धूमपानाभ्यासः तदा एव स्थगितः भविष्यति, यदा च मम श्वासोच्छ्वासः स्थगितः भवेत्'' इति ।

'धूमपानत्याजनम् एतत् असम्भवम् इत्येव भाति । धूमपानविषये मम पितुः मिथ्याधारणा अस्ति । धूमपानं विना जीवितुम् एव न शक्यते इति तस्य चिन्तनम् । एषः विचारः आदौ परिवर्तनीयः' इति चिन्तयित्वा भूषणः अवदत् - ''तात ! असमीचीनं चिन्तनं भवतः । त्यक्तुम् अशक्यः कोऽपि दुरभ्यासः नास्ति । सङ्कल्पशक्तिः अस्ति चेत् त्यक्तुं शक्यते । आदौ त्यक्तव्यम् इति इच्छा मनसि उत्पद्येत'' इति ।

''त्यक्तव्यम् इति इच्छा आ बहोः कालतः अस्ति । सर्वेषां दुर्व्यसनवताम् अपि एषा एव अवस्था । इच्छायां सत्याम् अपि त्यागे असामर्थ्यम्'' इति असहायकताम् अदर्शयत् माधवः ।

भूषणः अपृच्छत् - ''यदि धूमपानाभ्यासः परित्यज्यते तर्हि लक्षं रूप्यकाणि दास्यन्ते इति कोऽपि वदति चेत् किं कुर्यात् भवान् ?'' इति ।

''त्यजेयम् एव धूमपानाभ्यासम् । किन्तु कः मूर्खः लक्षं रूप्यकाणि दद्यात् ?'' इति हसन् अवदत् माधवः ।

''एतस्मात् स्पष्टं यत् इच्छा जाता चेत् धूमपानाभ्यासः त्यक्तुं शक्यते एव भवता इति । कोऽपि छुरिकां प्रदर्श्य - 'धूमपानं न परित्यक्तं चेत् शिरश्छेदः क्रियते' इति

वदति चेत् किं क्रियते भवता ?'' इति पुनः पृष्टवान् भूषणः ।

''धूमपानं त्यजामि इति वदामि । किन्तु तस्य निर्गमनस्य अनन्तरं धूमपानस्य आरम्भं करिष्यामि'' इति हसन् अवदत् माधवः ।

तदा भूषणः कोपेन - ''तात ! मया उच्यमानस्य गम्भीरता न परिगणिता भवता । धूमपानं भवता न परित्यज्यते चेत्, न जाने, मया किं क्रियेत इति'' इति उक्त्वा सः ततः निर्गतवान् ।

भूषणः तस्मिन् दिने भोजनं न कृतवान् । माता बहुधा बोधितवती, अनुनयं च कृतवती । तथापि भूषणस्य मनः न परिवृत्तम् । यदा माधवेन विषयः ज्ञातः तदा सः पत्नीम् अवदत् - ''किमर्थम् अनुरोधः, चिन्ता वा ? यदि बुभुक्षा तीव्रा भवति तर्हि स्वयम् आगत्य भोजनं क्रियते एव'' इति ।

किन्तु भूषणस्य निरशनव्रतं न समाप्तम् । उपवासम् आचरन् एव सः कार्याणि करोति स्म । सप्ताहाभ्यन्तरे तस्य शरीरे अस्वास्थ्यचिह्नानि दृष्टानि । मुखे कान्तिहीनता, शरीरे निश्शक्तिः च उत्पन्ना ।

भूषणस्य स्थितिं दृष्ट्वा खिन्ना तस्य माता अपि आहारसेवनं परित्यक्तवती । दिनद्वयस्य अभ्यन्तरे श्रान्ता सा शय्याम् आश्रितवती ।

प्रतिवेशिनः बान्धवाः च माधवं तर्जितवन्तः । 'धूमपाने निरतस्य पुत्रस्य विषये कुपितः पिता दृष्टः अस्माभिः । किन्तु पितुः धूमपानस्य त्याजनार्थं कोपं कुर्वन्, उपवासम् आचरन् पुत्रः तु ऐदम्प्राथम्येन दृश्यते' इति ते तम् उक्तवन्तः ।

परिस्थितेः गम्भीरता इदानीं ज्ञाता माधवेन । धूमपानस्य निमित्तं पत्नीपुत्रयोः वियोगं प्राप्तुं न इच्छति स्म सः । 'यदि पुत्रस्य पत्न्याः वा प्राणापायः भवेत् तर्हि .....' इति चिन्तयतः तस्य हृदयं कम्पितम् अभवत् । सः धूमवर्तिकाकोषं दूरे क्षिप्त्वा पुत्रम् आलिङ्ग्य अवदत् - ''वत्स ! जयः प्राप्तः भवता । अहं पराजितः अस्मि । उत्तिष्ठतु, भोजनं करोतु'' इति ।

''वास्तविकः जयः भवतः एव तात ! धूमपानरूपं दैत्यं जितवान् भवान् । इदानीं धूमपानं विना अपि आनन्दं प्राप्तुम् अर्हति भवान्'' इति अवदत् भूषणः ।





# मन्दमतिः

कावेरीतीरे स्थिते अग्रहारे गोवर्धनः नाम कश्चन निर्धनः निवसति स्म । चिरकालानन्तरं तेन एकः पुत्रः प्राप्तः । तस्य नाम श्रीवर्धनः इति निश्चितम् । श्रीवर्धनः आ बाल्यात् मन्दः एव । उपविष्टः सः अन्यसूचनां विना न उत्तिष्ठति । 'शयनं करोतु' इत्यपि सूचनीयं भवति स्म ।

'यदि विद्याभ्यासव्यवस्था समीचीना क्रियेत तर्हि एतस्य मन्दमतिता अपगच्छेत्' इति चिन्तयित्वा मातापितरौ श्रीवर्धनं गुरुकुलं प्रेषितवन्तौ । द्वादश वर्षाणि यावत् तेन गुरुकुले विद्याभ्यासः कृतः । तथापि तस्य मन्दमतित्वं तु न अपगतम् । श्रीवर्धनः यद्यपि मन्दमतिः, तथापि अलसः तु न ।

विद्याभ्याससमाप्तेः अनन्तरं गोवर्धनः पुत्रं गृहकार्येषु एव नियोजितवान् । यतः अन्यत् किमपि कार्यं कर्तुं सामर्थ्यं न आसीत् तस्य । तद्द्वारा गृहकार्यं कारणीयं चेत् लघवः अपि अंशाः विस्तरेण वक्तव्याः भवन्ति स्म । अन्यथा प्रमादं करोति स्म सः । एतत् सोढुम् अशक्नुवती तदीया माता पदे पदे कुप्यति स्म । गच्छता कालेन तस्याः दृष्टिशक्तिः क्षीणा जाता । अतः पाकः अपि श्रीवर्धनेन एव करणीयः अभवत् ।

'यदि एतस्य विवाहः निर्वर्त्येत तर्हि पत्नी एव एतद्द्वारा कार्यं कारयेत् । तदा अस्माकं कष्टं निवारितं स्यात् । सा आगत्य पाकं वा कुर्यात्' इति विचिन्त्य गोवर्धनः पुत्रस्य विवाहं निर्वर्तितवान् । तस्य स्नुषा बुद्धिमती आसीत् । तस्याः नाम सुशीला इति ।

पतिगृहम् आगता सुशीला गृहकार्याणि सर्वाणि स्वयं निर्वर्तयति स्म । अतः किं कार्यं करणीयम् इति अजानन् श्रीवर्धनः गृहस्य पुरतः मौनेन उपविशति स्म । पुत्रस्य एतादृशीं प्रवृत्तिम् असहमाना माता कदाचित् - "किमपि कार्यम् आदिशन्ती पतिम् अपि गृहकार्ये योजयतु" इति उक्तवती । पत्युः बुद्धिसामर्थ्यम् अल्पम् इति जानती सुशीला पतिं किमपि कार्यं न वदति स्म एव ।

सर्वदा मृत्पिण्डम् इव उपविशन्तं पुत्रं

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*



कदाचित् उक्तवती माता - ''किं साहाय्यं करणीयम् इति पत्नीं पृच्छतु तावत् । विना कार्यं किमर्थम् उपविश्यते ?'' इति ।

श्रीवर्धनः पत्न्याः समीपं गत्वा उक्तवान् - ''किमपि कार्यम् अस्ति चेत् वदतु । करिष्यामि'' इति ।

''ज्येष्ठाः कार्यम् आदिशेयुः । पत्नी अहं कथं भवन्तम् आदिशेयम् ? मातरम् एव गत्वा किमपि कार्यम् अस्ति वा इति पृच्छतु'' इति उक्तवती सुशीला ।

श्रीवर्धनः मातुः समीपं गत्वा अपि उक्तवान् - ''किमपि कार्यम् अस्ति चेत् वदतु । करिष्यामि'' इति ।

''अहं तु अन्धा । किं वा कार्यम् आदिशेयम् ? अतः पितरम् एव पृच्छतु'' इति उक्तवती माता ।

''पत्नी अम्बा वा मां किमपि कार्यं न वदतः । मया किं करणीयम् ? भवान् एव आदिशतु'' इति पितरं पृष्टवान् श्रीवर्धनः ।

''सर्वं मम दौर्भाग्यस्य फलम् ! गृहे कार्याणि राशीकृतानि भवन्ति सर्वदा । किन्तु भवान् तु कर्तुं योग्यम् एकम् अपि कार्यं न पश्यति । श्रमेण क्षेत्रे कृषिः कर्तुं शक्या । यत् ज्ञातं तत् छात्रान् बोधयितुम् अपि शक्यते । मन्दिरे पूजादिकार्यं कृतं चेदपि अल्पः आयः प्राप्येत । एवं कर्तुं योग्यानि कार्याणि अनेकानि । तथापि किङ्कर्तव्यता-मूढता भवतः ! किं वदानि ? वनं गत्वा तपस्यां वा करोतु । सन्तुष्टः भगवान् वरं दद्यात्'' इति कोपेन अवदत् गोवर्धनः ।

एतम् एव आदेशं भावयन् श्रीवर्धनः अरण्यं गत्वा श्रद्धया तपः आरब्धवान् । तस्य तपसा तुष्टः देवः प्रत्यक्षीभूय - ''भवतः तपस्यया अहं सन्तुष्टः । किं वरं याचितुम् इच्छति भवान् ?'' इति अपृच्छत् ।

''कः वरः याचनीयः इति अहं किं जानामि ? गृहं गत्वा पत्नीं, मातरं, पितरं वा पृष्ट्वा आगमिष्यामि । तावत् भवान् अत्रैव तिष्ठतु'' इति उक्त्वा धावन् गृहं गत्वा पितरम् उद्दिश्य - ''तात ! भवता यथा उक्तं तथा तपः आचरितं मया । देवः प्रत्यक्षीभूय अवदत् - 'वरं याचताम्' इति । कः वरः याचनीयः इति वदतु भवान्'' इति अवदत् ।

तदा कुपितः गोवर्धनः - ''सुवर्णराशिः आवश्यकः इति कुतः वा न पृष्टं भवता ?'' इति अगर्जत् ।



*उपदेशमात्रेण कस्यापि स्वभावः परिवर्तितः न भवति । अत्यधिकतया उष्णीकृतम् अपि जलम् अचिरात् एव स्वयं शीतलं भवति ।*

***– पञ्चतन्त्रम्***

अत्रान्तरे पुत्रस्य कथनं श्रुतवती माता उक्तवती – ''मम दृष्टिशक्तिः यथा भवेत् तथा वरं याचतु'' इति ।

एतावता विषयं ज्ञातवती सुशीला अवदत् – ''उत्तमः पुत्रः आवश्यकः इति प्रार्थनां करोतु'' इति ।

''अस्तु, अस्तु'' इति उक्त्वा श्रीवर्धनः अरण्यम् आगतवान् धावन् एव । किन्तु तत्र भगवान् न आसीत् । सर्वत्र भगवान् अन्विष्टः तेन । एवम् अन्वेषणसमये तपस्यानिरतः कश्चन मुनिः तेन दृष्टः ।

''किञ्चित्कालात् पूर्वं भगवान् मम पुरतः प्रत्यक्षः जातः आसीत् । किं सः अत्र कुत्रापि आगतः ?'' इति अपृच्छत् श्रीवर्धनः ।

एतत् श्रुत्वा सः मुनिः कोपेन – ''कीदृशः मूर्खः भवान् ! यदा भगवान् प्रत्यक्षः जातः तदा वरम् अपृष्ट्वा इदानीं तस्य अन्वेषणं क्रियते ! मन्दभाग्य ! म्रियस्व क्वचित् ! धिङ् मूर्ख ! भवादृशाः मूर्खाः एतस्मिन् लोके स्थातुं सर्वथा अनर्हाः'' इति अतर्जयत् ।

मुनेः वचनानुसारं मरणम् एव शरणं मम इति चिन्तयित्वा श्रीवर्धनः ततः प्रस्थितवान् । पुरतः शिलामयः कश्चन पर्वतः दृष्टः । सः तम् आरोढुम् उद्युक्तः अभवत् ।

मध्येमार्गं कश्चन व्याधः मिलितः । सः श्रीवर्धनम् अपृच्छत् – ''पर्वतस्य उपरि किम् अस्ति ? किमर्थं तत्र गम्यते ?'' इति ।

''शिखरात् उत्प्लुत्य मरणं प्राप्तुम्'' इति वदन् श्रीवर्धनः स्वकथां विस्तरेण उक्तवान् ।

सर्वं श्रुत्वा व्याधः अवदत् – ''अये मूर्ख ! भवान् वरं न याचितवान् चेदपि सर्वज्ञः भगवान् भवतः अपेक्षां ज्ञातवान् स्यात् एव । अतः मरणविचारं परित्यज्य गृहं गच्छतु । भवतः इच्छाः भगवान् पूरयिष्यति'' इति ।

यदा श्रीवर्धनः गृहं प्रत्यागतः तदा गृहं ऐश्वर्येण पूर्णम् आसीत् । माता च दृष्टिमती आसीत् । एतत् दृष्ट्वा श्रीवर्धनस्य सन्तोषः जातः । वर्षाभ्यन्तरे तस्य पत्नी सुन्दरं पुत्रं प्रसूतवती । भगवतः दर्शनं प्राप्य आगतवन्तं श्रीवर्धनं जनाः महता आदरेण दृष्टवन्तः । ऐश्वर्यादिकम् अपि आसीत् इत्यतः तस्य जीवनं सुखमयं जातम् ।





# सरलम् उत्तरम्

बहुप्राचीने काले कश्चन धनिकः वणिक् आसीत् । सः परमस्वार्थी कृपणः च आसीत् ।

एकदा सः वाणिज्यार्थं सुदूरस्थं नगरं प्रति प्रस्थितवान् । सः स्वसाहाय्यार्थं युसुफनामकं युवकम् आत्मना सह नीतवान् ।

प्रस्थानात् पूर्वं युसूफः उक्तवान् - ''प्रभो, प्रायः अहं सुदूरप्रयाणस्य श्रान्तिं सोढुं न शक्नुयाम्'' इति ।

''तद्विषये भवतः किमर्थं चिन्ता ? श्रमविभागे अहं साहाय्यं करिष्यामि'' इति अवदत् धनिकः ।

वणिक् वस्तुवाहने योजितस्य अश्वस्य उपरि उपविश्य प्रयाणं कृतवान् । अश्वेन सह धावनीयम् आसीत् युसूफेन । एकवारम् अपि अश्वस्य उपरि उपवेष्टुं युसूफाय अवकाशं न दत्तवान् धनिकः ।

यदा अश्वस्य अल्पा विश्रान्तिः तदा एव युसूफस्यापि विश्रान्तिः । एतेन एव क्रमेण आसायं प्रयाणं प्रवृत्तम् । रात्रौ कुत्रापि पटमण्डपं निर्माय विश्रान्तिः स्वीकरणीया इति धनिकः सङ्कल्पितवान् । तदनुगुणं प्रशस्ते स्थले पटमण्डपः निर्मितः । ''अश्वस्य आहार-क्षालनादिव्यवस्थां करोतु'' इति आदिश्य धनिकः विश्रान्त्यर्थं पटमण्डपस्य अन्तः गत्वा शय्यां प्रसार्य सुप्तवान् ।

तदा युसूफः अवदत् - ''श्रमविभागे साहाय्यं क्रियते इति प्रस्थानसमये उक्तम् आसीत् भवता । अतः मध्यरात्रपर्यन्तम् अहं रक्षणव्यवस्थां निर्वक्ष्यामि । तदनन्तरं भवान् तत् कार्यं करोतु । अहं किञ्चित् विश्रान्तिं स्वीकरिष्यामि'' इति ।

''वत्स ! श्रमविभागस्य क्रमः अन्यरूपेण चिन्तितः मया । विक्रय्यवस्तूनाम् अश्वस्य च रक्षणं भवता एकेन एव कर्तुं न शक्येत । अतः पटमण्डपात् बहिः स्थितस्य अश्वस्य रक्षणं भवान् करोतु । अन्तः स्थितानां वस्तूनां रक्षणम् अहं करिष्यामि'' इति असूचयत् वणिक् ।

युसूफः स्वामिनः आदेशं पालयन् पटमण्डपात् बहिः वृक्षस्य अधः उपविश्य रक्षणकार्ये अवधानं दत्तवान् । श्रान्तिकारणतः उपविष्टेन एव तेन अल्पा निद्रा प्राप्ता ।

मध्यरात्रसमये पटमण्डपस्य अन्तः शयितः

*अफघानिस्थानीया कथा*

धनिकः अपृच्छत् - ''युसूफ ! किं क्रियमाणम् अस्ति भवता ?'' इति ।

''चिन्तयन् अस्मि श्रीमन् !'' - युसूफः उत्तरं दत्तवान् ।

''कस्य विषये चिन्तनम् ?'' - वणिक् अपृच्छत् ।

''पाटलपुष्पस्वीकारार्थं यदा गम्यते तदा कण्टकपीडामात्रम् एव प्राप्यते चेत् किं करणीयम् ? इति ।''

''कण्टकपीडाम् उपायेन परिहृत्य ततः प्रत्यागन्तव्यं मित्र ! बुद्धेः उपयोगः करणीयः'' इति उक्त्वा पुनरपि निश्चिन्ततया निद्रां कृतवान् धनिकः ।

घण्टाद्वयानन्तरं सः पुनः अपृच्छत् - ''युसूफ ! अधुना भवता किं क्रियते ?'' इति ।

''चिन्तनम् एव क्रियते श्रीमन् !''

''इदानीं कीदृशं चिन्तनम् प्रचलति ?''

''यदि श्वः सूर्यः एव न उदियात् तर्हि किं भवेत् ?''

''न काऽपि चिन्ता । अहं तु उषःकाले उत्थाय सूर्योदयस्य प्रतीक्षाम् अकृत्वा प्रयाणम् अनुवर्तयिष्यामि'' इति उक्त्वा वणिक् पुनरपि निद्राम् अकरोत् ।

पुनरपि घण्टाद्वयानन्तरं शयानः एव सः अपृच्छत् - ''किं क्रियते युसूफ ?'' इति ।

''इदानीम् अपि गाम्भीर्येण चिन्तयन् एव अस्मि श्रीमन् !''

''इदानीन्तनचिन्तनस्य विषयः कः ?'' - अपृच्छत् धनिकः ।

''ह्यः तु मम स्वामी अश्वस्य उपरि उपविष्टः सन् प्रयाणम् अकरोत्, अहं च अधावम् । किन्तु अद्य अश्वस्य उपरि कः उपविशेत्, कश्च धावेत् इति चिन्तयन् अस्मि । यदि अश्वः एव न भवेत् तर्हि मम स्वामी किं वा कुर्यात् इति मम चिन्तनम्'' इति उक्तवान् युसूफः ।

''अश्वाभावे मया अपि पादाभ्यां गम्यते'' इति उत्तरं दत्तवान् धनिकः ।

किञ्चित्कालानन्तरं तस्य मनसि विचारः आगतः - युसूफस्य वचनस्य विशेषतात्पर्यं किमपि अस्ति इति । अतः सः झटिति उत्थाय बहिः आगत्य परिशीलितवान् । किन्तु तत्र न आसीत् युसूफः, न वा तदीयः अश्वः । अश्वम् आरुह्य ततः पलायितवान् आसीत् युसूफः ।

'यदि दत्तस्य आश्वासनस्य अनुगुणं युसूफस्य विश्रान्त्यर्थम् अपि अल्पः अवकाशः कल्पितः स्यात् तर्हि युसूफः अश्वस्य अपहरणं न अकरिष्यत् । मूर्खेण मया अविवेकः कृतः' इति चिन्तयन् महान्तं खेदम् अनुभूतवान् धनिकः ।

किन्तु महता खेदेन अपि किं, सुदूरप्रयाणं पादाभ्याम् एव करणीयम् आसीत् तेन ।



# चन्दमामा

भारतस्य अवगतिः प्रश्नोत्तरम्

# स्वपरम्परा अभिज्ञायताम्

एतस्मिन् अङ्के प्रकाशितायाः प्रश्नावल्याः उत्तरम् अग्रिमे अङ्के प्रकाशयिष्यते । तदभ्यन्तरे एतेषाम् उत्तरं स्वयं ज्ञात्वा भारतस्य प्राचीनपरम्पराम् अवगत्य ज्ञानं सुसमृद्धं क्रियताम् ।



## 1

''प्रतिदिनम् असङ्ख्यान् जनान् मृत्युमुखं प्रविशतः पश्यामः वयम् । तथापि मरणरहिताः इव व्यवहरामः । अहो, आश्चर्यम् !''

इत्येवं कः कदा किमर्थम् अवदत् ?

## 2

अधोनिर्दिष्टानां पौराणिकपात्राणां स्थलानां च कः सम्बन्धः ?

क) शकुनिः - गान्धारः

च) केसरी - महामेरुः

ट) सहदेवः - माहिष्मती

त) भरतः - केकयम्

प) वाल्मीकिः - तमसा





चन्दमामा - विविधभाषामयी

- अभिन्नपरम्पराद्योतिका

# अल्पमूल्यता किमर्थम्

एकदा धेन्वाः विक्रयणार्थं शिवः साप्ताहिकवाणिज्यस्थलं गतवान् । सः धेन्वाः प्रशंसां कुर्वन् ग्राहकान् वदति स्म - ''एषा उत्तमा धेनुः इति दर्शनमात्रेण एव ज्ञायते । शरीरलक्षणानि एव एतस्याः उत्तमकुलजातत्वं ख्यापयन्ति'' इति ।

अन्यग्रामात् आगतः विष्णुः समययापनार्थं साप्ताहिकवाणिज्यस्थले अटन् आसीत् । सः शिवेन कृतां धेन्वाः प्रशंसां श्रुत्वा अपृच्छत् - ''किं मूल्यम् एतस्याः ?'' इति ।

''सहस्रं रूप्यकाणि'' - शिवः अवदत् ।

एषा धेनुः सहस्राधिकरूप्यकमूल्यम् अर्हति एव इति विष्णुः जानाति स्म । धेनुक्रयणेच्छा तु तस्य न आसीत् । अतः 'विक्रेता यावत् अल्पमूल्यं न अङ्गीकुर्यात् तावता मूल्येन विक्रयणं प्रार्थनीयम्' इति विचिन्त्य सः अपृच्छत् - ''किम् एषा पञ्चशतेन रूप्यकैः विक्रीयते ?'' इति ।

शिवः विष्णुं सकृत् नखशिखान्तं दृष्ट्वा - ''अस्तु, तेनैव मूल्येन दीयते । दीयतां पञ्चशतं रूप्यकाणि'' इति अवदत् ।

विष्णुः शिवाय पञ्चशतं रूप्यकाणि दत्तवान् । तावता तस्य मनसि सन्देहः उत्पन्नः - 'सहस्राधिकमूल्यकधेनुः किमर्थं वा एतेन एतावता अल्पमूल्येन विक्रीयते ?' इति । अतः सः शिवम् अपृच्छत् एव - ''सहस्राधिकरूप्यकैः विक्रेतुं योग्या एषा भवता किमर्थं एवम् अल्पमूल्येन विक्रीयते ?'' इति ।

तदा शिवः विष्णुना दत्तं धनं कोषे स्थापयन् - ''या धेनुः मम न, सा येनकेनचित् वा मूल्येन विक्रीता चेदपि मम लाभः एव खलु ?'' इति वदन् ततः धावन् जनानां मध्ये कुत्रापि अदृश्यः अभवत् ।

एतत् श्रुत्वा, शिवस्य व्यवहारं च दृष्ट्वा विष्णुः नितरां खिन्नः । 'वञ्चकः तु माम् अवञ्चयत् । यदि एषा धेनुः गृहं प्रति नीयते तर्हि चौर्यारोपः अपि सम्मुखीकरणीयः भवेत्' इति विचिन्त्य सः धेनुं तत्रैव परित्यज्य गृहम् आगतवान् ।



# भारतम्
## पूर्वम् इदानीं च



## द्वारका
### अतीतगरिमद्योतिका

द्वारका भारतस्य पौराणिकस्थलेषु अन्यतमा । एतत् गुजरातराज्ये अस्ति । एतत् नगरं स्वयं श्रीकृष्णः एव प्रतिष्ठापितवान् इति जनैः विश्वस्यते । द्वारावती इति एतस्याः अपरं नाम । एतस्याः प्राचीनं नाम कुशस्थली इति आसीत् । आख्यानतः ज्ञायते यत् श्रीकृष्णस्य राजधान्याः निर्माणार्थं समुद्रराजः किञ्चित् अपसृतवान्, ततः कृष्णः पर्याप्तमात्रेण भूमिं प्राप्तवान् इति । श्रीकृष्णस्य अवसानस्य अनन्तरं समुद्रराजः आत्मना दत्तां भूमिं प्रतिस्वीकृतवान् । तत्कारणतः भूयान् भागः समुद्रे लीनः जातः । यः भागः स्वस्य न आसीत्, स च भागः न स्पृष्टः समुद्रराजेन । वेदद्वाराकानाम्ना अयं द्वीपप्रदेशः अद्यापि द्रष्टुं शक्यः ।

वेदद्वारकासमीपे उत्खननतः ज्ञातम् अस्ति यत् एतस्मिन् प्रदेशे पूर्वं सुसमृद्धम् एकं नगरम् आसीत् इति । इदानीं यत् द्वारकानगरम् अस्ति तत् तस्मिन् स्थाने निर्मितं षष्ठं नगरम् । तन्नाम एतस्मिन् स्थले इतः पूर्वं विविधे कालखण्डे पञ्चवारं नगराणि निर्मितानि आसन् । पुराणानि अपि ज्ञापयन्ति यत् श्रीकृष्णतः पूर्वम् एव अत्र नगरं किञ्चन आसीत् इति ।

मोक्षदायिकासु नगरीषु अन्यतमा अस्ति द्वारका । अन्याश्च - अयोध्या, मथुरा, उज्जयिनी, वाराणसी, काञ्चीपुरम्, हरिद्वारं चेति ।

श्रीकृष्णस्य प्रासादः रैवतकपर्वतस्य मूलभागे आसीत्, पर्वतयोः मध्यभागे वा । वेदद्वारका पर्वतसमूहे प्रसृता अस्ति । एतस्य भूयान् भागः गुल्मैः आवृतः । प्राचीनमूर्तीनाम् स्मारकाणां च अवशेषाः एतस्मिन् प्रदेशे तत्र तत्र उपलभ्यन्ते । एतस्मात् स्पष्टं यत् अत्र पूर्वं नगरम् आसीत् इति ।

शङ्कराचार्यः भारतस्य चतुर्षु पवित्रस्थानेषु चतुरः मठान् स्थापितवान् । दक्षिणे शृङ्गगिर्यां,

पूर्वस्यां पुरीनगर्यां, पश्चिमायां द्वारकायाम्, उत्तरे बदर्यां च तेन मठाः स्थापिताः । तेन स्थापितः मठः द्वारकाधीशमन्दिरस्य निकटे एव अस्ति । एतस्मिन् मन्दिरे रमणीया कृष्णप्रतिमा अस्ति ।

गोमतीनदीतीरे स्थितम् एतत् मन्दिरं श्रीकृष्णवंशीयः वज्रनाभः निर्मापितवान् । इदानीं या संरचना अस्ति तां राजा जगतसिंहराठौरः निर्मापितवान् । एषा भव्या विशाला च संरचना । सहस्रशः भक्ताः प्रतिदिनम् एतत् मन्दिरं द्रष्टुम् आगच्छन्ति । इदानीं यत् मन्दिरस्थानम् अस्ति तत्र पूर्वं कृष्णस्य जीवितकाले राजास्थानभवनम् आसीत् ।

१५४६ तमे वर्षे मेवाडस्य राज्ञी मीराबायी एतस्यां प्रतिमायां विलीना जाता इति काचित् जनश्रुतिः श्रूयते ।

मन्दिरस्य दक्षिणभागे शान्तगम्भीरा गोमतीनदी प्रवहति । देवालयतः ५६ सोपानानि अवतीर्णानि चेत् नदी प्राप्यते । अग्रे एषा गुप्तरूपेण गङ्गया सङ्गता भवति इति जनाः भावयन्ति ।

एतस्य मन्दिरस्य द्विकिलोमीटर्दूरे श्रीकृष्णस्य पत्न्याः रुक्मिण्याः मन्दिरम् अस्ति । तत्रैव नागेश्वरमहादेवतीर्थं नाम एकं प्राचीनं शिवमन्दिरम् अपि अस्ति । ततः अनतिदूरे एकं सरोवरम् अस्ति । श्रीकृष्णस्य बाल्यसुहृदः यदा वृन्दावनतः तं द्रष्टुं द्वारकाम् आगताः तदा एतस्य सरोवरस्य तीरे वसतिं कृतवन्तः आसन् ।

एवं द्वारकानगर्याम् आ श्रीकृष्णात् आमीराबायि बहूनां श्रेष्ठपुरुषाणां स्मरणानि निहितानि सन्ति ।

द्वारकानगरसमीपे कानिचन आधुनिकानि यन्त्रागाराणि अपि सन्ति । तत्परिसरे जनसम्मर्दादीनि अशान्तिचिह्नानि दृश्यन्ते । तदितरेषु प्रदेशेषु तु प्रशान्तः परिसरः । आधुनिकजीवनस्य सर्वेषु साधनेषु सत्सु अपि अत्रत्यः परिसरः अतीतस्य गरिमाणम् एव प्राधान्येन स्मारयति ।

आधुनिकद्वारकायाम् अनेकाः शैक्षणिक--सांस्कृतिकसंस्थाः सन्ति । ताः सर्वाः अपि श्रीकृष्णनाम्ना सम्बद्धाः एव प्रायः । द्वारकावासिनः अद्यापि साभिमानं वदन्ति यत् अस्मदीयनगर्यां श्रीकृष्णः स्वयं वसन् राज्यभारं निर्वहति स्म इति । तेषाम् अयम् अभिमानः अवास्तविकः न खलु !



# सङ्क्षोभग्रस्ता

श्रीलङ्कायाः प्राचीनेतिहाससम्बद्धः 'महावंशः' वदति यत् पूर्वकाले कदाचित् विजयसिंहः नाम पूर्वभारतीयः कश्चन राजकुमारः श्रीलङ्काद्वीपं प्राप्य वशीकृतवान् । तत्रत्याः मूलनिवासिनः अरण्यं प्रविष्टवन्तः । विजयसिंहस्य पञ्चशतम् अनुयायिनः आसन् । मधुरैनगरीयाः तरुणीः परिणीतवन्तः ते । इदानीं ये सिंहलीयाः सन्ति ते एतेषाम् एव सन्तानभूताः । विजयसिंहस्य



## कटाक्षेण प्रपञ्च-वीक्षणम्

मरणस्य अनन्तरं स च द्वीपः 'सिंहल'नाम्ना ख्यातः । अग्रिमे कालखण्डे सम्राजः अशोकस्य पुत्रः महेन्द्रः, पुत्री सङ्घमित्रा च एतं द्वीपम् आगत्य शासकपरिवारीयान् तदनुयायिनः च बौद्धान् कृतवन्तौ ।

अनन्तरकाले दक्षिणभारतात्, तत्रापि प्राधान्येन तमिळुराज्येभ्यः वणिजः अन्ये च गत्वा तत्र वासम् आरब्धवन्तः । जाफनाद्वीप-भागे तेषां वासः प्रसृतः विशेषतः ।

सिंहळीयाः तमिळीयाः च ये श्रीलङ्कादेशे इदानीं सन्ति ते उभयविधाः अपि भारतमूलाः एव । तमिळुजनाः तत्र अल्पसङ्ख्याकाः । 'बहुसङ्ख्याकाः सिंहलीयाः अस्मद्विषये अन्याय्यम् आचरन्ति' इति तेषां कथनम् । ते 'टुल्फ्' (तमिळु युनैटेड् लिबरेषन् फ्रण्ट् - (TULF) नामकं सङ्घटनम् आरचय्य सङ्क्षोभम् आरब्धवन्तः । गच्छता कालेन तत्र अन्यानि अपि तमिळुसङ्घटनानि उत्पन्नानि । तेषु 'एल्टिटिई' नामिका (लिबरेषन् टैगर्स् आफ् तमिळु ईळम्) संस्था उग्रवादम् अवलम्बते ।



# श्रीलङ्का

'श्रीलङ्कातः पृथग्भूतं स्वतन्त्रं राज्यं स्यात् अस्माकम्' इति तस्याः वादः ।

अभिप्रायभेदकारणतः अन्यानि तमिळु-



सङ्कटनानि मार्गान्तरम् आश्रयन् । 'तमिळीयानां समस्याम् अहम् एव परिहरिष्यामि' इति उदघोषयत् एल्टिटिई । अभिप्रायभेदं दर्शितवन्तः नायकाः तया संहृताः । एतेन क्रमेण बहवः तमिळुनायकाः प्राणवियोगं प्राप्तवन्तः । भारतस्य भूतपूर्वप्रधानमन्त्री राजीवगान्धिः अपि तया संस्थया बलिरूपेण स्वीकृतः ।

एल्टिटिईसंस्था-श्रीलङ्कयोः सङ्घर्षः आ बहोः कालात् प्रवर्तमानः अस्ति । एतस्य परिणामतः जाफनाप्रदेशीयाः सामान्याः जनाः नितरां पीडिताः सन्ति । श्रीलङ्कीयया अर्थव्यवस्थया अपि महान् आघातः प्राप्तः अस्ति । निराश्रितत्वेन सहस्रशः तमिळीयाः भारतम् आगताः सन्ति । स च सङ्घर्षः तु दिने दिने तीक्ष्णा जायमाना दृश्यते ।

श्रीलङ्कीयतमिळुजनानां विषये भारतदेशः सर्वदा सहानुभूतिं दर्शयति । किन्तु श्रीलङ्कादेशस्य विभागं तु सर्वथा न इच्छति सः । देशविभागतः समस्यायाः परिहारः न भवति इत्येतम् अंशं स्वानुभवात् एव जानाति भारतम् । भारतस्य विभागः न उपकरोत् भारतं, न वा पाकिस्थानम् । प्रत्युत उभयदेशे अपि असन्तृप्तिः अनुवर्तते ।

अन्यच्च, एल्टिटिईसंस्थया या कार्यशैली आश्रिता तां कोऽपि प्रजाप्रभुत्वोपेतदेशः समर्थयितुं न अर्हति । गौरवान्वितनायकानां वधः, आतङ्कवादस्य आश्रयणम् इत्यादयः कथं समर्थनार्हाः भवेयुः ? भयोत्पादनं सर्वैः अपि खण्डितम् ।

परस्परचर्चातः, परस्परावगतितः च साधयितुम् अशक्यं किमपि नास्ति । श्रीलङ्कादेशे सौहार्दपरिसरः निर्मितः भवतु, सङ्क्षोभस्थाने शान्तिः संस्थिता भवतु इति सर्वे देशाः इव भारतम् अपि आशास्ते ।

# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५



युक्ता शीर्षिका जुलै - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य सप्टम्बर्मासे प्रकाशयिष्यते ।

## अभिनन्दनानि

**'मे'स्पर्धाशीर्षिकाप्रेषकः-**



***बि. के. रङ्गनाथः***
*'विक्रम' ५ मुख्यमार्गः*
*चामराजपेटे, बेङ्गलूरु - १८*



*प्रथमचित्रम्* - **बलहीन ! बलिस्त्वमसि ।**
*द्वितीयचित्रम्* - **बलशाली भवाम्यतः ।**

